आचार्यश्रीमद्विजयसिद्धिसूरीश्वरजी ग्रन्थमालायाः प्रथमं पुष्पम् ।

महामहोपाध्याय श्रीमद् लावण्यविजयजीगणि विरचिता

# ॥ श्रीद्रव्यसप्ततिका (स्वोपज्ञवृत्तियुता) ॥



आचार्यश्रीमद्विजयसिद्धिसूरीश्वरजी ग्रन्थमालायाः प्रथमं पुष्पम् ॥

अर्हम्

॥ श्रीशान्तिनाथाय नमः ॥

॥ सकलश्रमणसमूहशिरोमणि–ज्ञानवयोवृद्ध–गीतार्थाग्रगिसूरिपुङ्गवश्रीमद्विजयसिद्धिसूरीश्वरपादपद्मेभ्यो नमो नमः ॥

महामहोपाध्याय श्रीमद् लावण्यविजयजीगणि विरचिता

# ॥ श्रीद्रव्यसप्ततिका ( स्वोपज्ञवृत्तियुता ) ॥

देवद्रव्यादिक दोषथी दूषित थयेला तथा थता अनेक जैनबन्धुओने जोइ, तेमना उपकारार्थे आ ग्रन्थने अत्यन्त उपयोगी सकलागमतत्त्ववेदक सूरिशेखर श्रीमद्विजयसिद्धिसूरीश्वरजी महाराजना परमविनेय पू० श्रीप्रमोदविजयजी महाराजना शिष्यरत्न शान्तमूर्ति पू० पं. श्रीमेरुविजयजी गणिवरना सदुपदेशथी प्राप्त थयेल द्रव्य सहायथी छपावी प्रसिद्ध करनार विजयसिद्धिसूरीशग्रन्थमाला तरफथी मास्तर प्रभुदास दीपचंद वीलीमोरा.


प्रथमावृत्ति प्रत १०००

किमत अमूल्यम्

वीर संवत् २४६१
विक्रम संवत् १९९१

# ક્ષમાપના

આ ગ્રન્થનું મેં મારી અલ્પ બુદ્ધિ અનુસાર છાપેલી પ્રત ઉપરથીજ બીજી પ્રતોના અભાવે (૯ પૃષ્ઠથી) ઉપયોગ પૂર્વક કર્યું છે. છતાંયે આમાં જે ભૂલો રહી જવા પામી છે. તેનું શોધન પત્ર પણ તૈયાર કરી છપાવવામાં આવ્યું છે. છતાંયે મતિ મંદતાથી જે કાંઇ ક્ષતિ રહીજવા પામી હોય તે ક્ષમ્ય ગણી સુધારી વાંચવા અને જણાવવા વિનંતિ કરતો વિરમું છું. શા. ૧૯૯૬ કાર્તિક શુદ પુનમ.

જૈનાચાર્ય શ્રીમદ્ વિજયભદ્રસૂરીશ્વરજી મહારાજના પ્રશિષ્ય
પંન્યાસપ્રવર શ્રીચરણવિજયજી ગણિવરશિષ્યાણુ

મુનિ હર્ષવિજય

ખેતરવસહી—ઉપાશ્રય પાટણ (ઉ.—ગુજરાત.)



वाङ्माधुर्यजिता जिता गतमदा
दिनामृगेऽधात्तृणं
येषां निगनिशुद्धताजितनिशा-
नाथः कलङ्कं दधौ;
ये दुग्धाम्बुधिशुद्धकीर्तिनिकरा
गङ्गाम्भसामाश्रमी,
कल्याणं रचयन्तु सिद्धिविजयाः
सूरीशाः सर्वदा ॥





जन्म
वि. सं. १९११
श्रावण सुदी १५
अमदावाद

लघु दीक्षा
वि. सं. १९३४
ज्येष्ठ वदी २
अमदावाद

वडी दीक्षा
वि. सं. १९३४
अषाड सुदी ११
अमदावाद





गणीपद
वि. सं. १९५७
आषाड सुदी ११
सुरत

पन्यासपद
वि. सं. १९५७
आषाड सुदी ११
सुरत

आचार्यपद
वि. सं. १९७५
महा सुदी ५
महेसाणा





प्रशान्त तपोमूर्ति पूज्यपाद
चारित्रवृद्ध तपागच्छालंकार
शासनप्रभावक संघस्थविर
आचार्यवर्य १००८
श्रीमद् विजयसिद्धिसूरीश्वरजी
महाराज.





# દ્રવ્યસપ્તતિકા સટીક તથા ભાષાન્તરમાં દ્રવ્ય સહાય કરનાર સદ્‌ગૃહસ્થોની નામાવલિ.

રૂા.

૬૦) સાધ્વીજી મહારાજશ્રી દેવશ્રીજી (કચ્છ વાગડવાલા) ના ઉપદેશથી એક શ્રાવિકા

૫૧) શા. કેશરીચંદ ભાણાભાઇ હસ્તે નેમચંદભાઈ બીલીમોરા

૫૧) શા. નાનચંદ ચેલાજી બીલીમોરા

૫૧) શા. મગનલાલ નાનચંદ ચીખલીવાલા

૫૧) શા. હીરાલાલ હરખચંદ ના ધર્મપત્ની સોનાંબેન સીમોદરાવાલા હ. શા. ફકીરચંદ ભાણાભાઇ વાગલધરાવાલા

૫૧) શા. વીરચંદ રામદાસ વલસાડવાલા

૫૧) બેન ગુલાબબેન શા રાયચંદ કપુરચંદની દીકરી હસ્તે શા. નગીનદાસ ઝવેરચંદ વલસાડવાલા

૫૧) શા. રાયચંદ ગુલાબચંદ અચ્છારીવાલા

૫૧) શા. હીરાલાલ વાડીલાલ કપડવંજ

૨૫) જાદવજીભાઈ મુળજીભાઈ આરંભડા

૨૫) શા. કસ્તુરચંદજી નાથાજી હસ્તે ખુબચંદભાઇ અછારી

૨૫) શા. મણીલાલ ખુમચંદ પાટણવાલા

૨૫) શા. શેષમલજી ભભુતમલજી ખાપોલીવાલા

૪૩) પરચુરણ ૫-૧૦ કે ઓછી વધતી રકમ આવી તેના

# શ્રી દ્રવ્યસપ્તતિકાના પ્રકાશન અંગે બે બોલ.

આ ગ્રન્થનું પ્રથમ પ્રકાશન શ્રી જૈનધર્મ પ્રસારક સભા તરફથી આડત્રીસ વર્ષ પૂર્વે મૂળ, ટીકા અને બંનેના ભાષાંતર સાથે થયું હતું. તે ગ્રંથ દુષ્પ્રાપ્ય થવાથી અને ચાલુ ટાઇમમાં દેવદ્રવ્યાદિકના દોષથી દૂષિત થતા, અનેક ભવ્યાત્માઓને જોઇને આ ગ્રન્થના પુનઃ સંસ્કરણની ભાવના અમારા હૃદયમાં કેટલાક વર્ષથી હતી, અને તે સકલ શ્રમણ સમૂહ શિરોમણિ તપોમૂર્તિ જ્ઞાન વયોવૃદ્ધ પ૦ પૂ૦ સાંપ્રતસમયસૂરિસિંહ શ્રીમદ્ વિજયસિદ્ધિસૂરીશ્વરજી મહારાજના પરમ વિનેય પૂ૦ શ્રી પ્રમોદવિજયજી મહારાજશ્રીના અનન્ય શિષ્યરત્ન પૂ૦ પં૦ મેરૂવિજયજી ગણિવરના સદુપદેશથી ફળીભૂત થતાં, અમે મૂળગ્રંથ ટીકા સાથે, અને મૂળ, મૂળ તથા ટીકાના અર્થ સાથે જુદું જુદું તે તે વસ્તુના ખપી આત્માઓના માટે તૈયાર કરાવેલ છે.

આ બંને ગ્રંથોનાં પ્રુફોનું વાંચન તેમજ શ્રાદ્ધવિધિ, ઉપદેશસપ્તતિકા, ઉપદેશ પ્રાસાદ, અને સેનપ્રશ્નાદિક ગ્રન્થોના દેવદ્રવ્યાદિ સંબંધે દૃષ્ટાંતો અને પ્રશ્નોતરો વિગેરે દેવદ્રવ્યાદિકની પુષ્ટિના માટે પરિશિષ્ટાદિક પ્રશમરસનિધિ ગીતાર્થાગ્રણી અને આચાર્યદેવ શ્રીમદ્ વિજયભદ્રસૂરિશ્વરજી મહારાજના પ્રશિષ્ય રત્ન પ્રખર વક્તા પંન્યાસ શ્રી ચરણવિજયજી ગણિવરના સાહિત્યરસિક શિષ્યરત્ન મુનિ મહારાજશ્રી હર્ષવિજયજી મહારાજ સાહેબે કરી, ગ્રન્થની શોભામાં વધારો કર્યો છે.

અને વૈરાગ્યામૃત વારિધિ પ્રશાંત તપોમૂર્તિ પૂજ્ય આચાર્ય પુંગવ શ્રીમદ્ વિજયભદ્રસૂરિશ્વરજી મહારાજના વિદ્વાન્ શિષ્યરત્ન મુનિમહારાજ શ્રી જનકવિજયજી મહારાજસાહેબે દ્રવ્યસપ્તતિકાનું દિગ્દર્શન લખી, ટુંકમાં ગ્રન્થનો પરિચય કરાવ્યો છે. તે બાબત ઉક્ત મુનિમહારાજાઓએ જે પોતાનો ટાઇમ અર્પી નિઃસ્વાર્થ ભાવે સેવા બજાવી છે, તે બદલ તેમનો આભાર માનવામાં આવે છે. અને તે પુસ્તકોના પ્રકાશનમાં જેમણે જેમણે મદદ અપાવી, યા આપી છે, તેમનો પણ આભાર માનવામાં આવે છે, અને બીજાઓ આ માર્ગને અનુસરી પોતાની લક્ષ્મીનું સાર્થક કરે એમ ઇચ્છી વિરમું છું.

લી૰ પ્રકાશક.

## ॥ श्रीद्रव्यसप्ततिकानुं संक्षिप्त दिग्दर्शन. ॥

अनंत उपकारी श्रमणभगवान् श्री महावीर परमात्माने प्रणमीने, ते महाप्रभुना श्रुतसागरमां सर्व निर्दिष्ट वस्तुओ होइ, तेमांनी श्री चैत्य, गुरु, ज्ञान, साधारण, अने धर्मनी निश्रावाळा द्रव्यनी सुंदर प्रकारे करायली व्यवस्थावाळी "दव्वसित्तरी"ना पुण्यप्रसंगे तथाप्रकारना शुभ दिग्दर्शनमां प्रवेश करतां हुं अति हर्ष पामुं छुं.परम तारकना पुण्य चिह्नोनो सुप्रसंग पामी, भवभीरु भव्यात्माओ स्वोपार्जितादि द्रव्यादिनी भक्ति आदिए भवभ्रमण निवारणनी विज्ञप्ति करे, ए सहज छे. अने आथी " तेनी " सुंदर प्रकारनी व्यवस्था स्वाभाविक होय, ए पण असहज नथी. ते सुंदर व्यवस्थाना मूळभूत रहस्यथी अज्ञात बाळजीवोने तथाविध व्यवस्थानो भव्योनी भक्तिआदिथी धरायेल द्रव्यना सदुपयोगना कारणे, अने ते ते प्रकारनी आशातना निवारणना कारणे, शुभमार्गदर्शक शुभ प्रयास करवो, ए पण अस्थाने नथी. ते ते शुभमार्गदर्शक प्रयास अनेक प्राचिन पुरुषो श्रीसर्वज्ञविशुद्धमार्ग द्वारा करता आव्या छे, अने सांप्रतकाळे अर्वाचीन पुरुषो पण करे छे.

श्रीद्रव्यसप्ततिकाना कर्ता महापुरुष पण एक प्राचिन पुरुष छे. तेओश्रीनुं शुभ नाम **श्रीलावण्यविजयजी** छे. तेओश्री जैन श्रमण होवा उपरांत श्रमणानुष्ठानद्वारा पाठक ( उपाध्याय ) पदथी अलंकृत हता. तेओश्रीना सद्गुरुवरनुं शुभ नाम सूरिपुंगव श्रीमद् **विजयभानुसूरीश्वरजी** महाराजा हतुं. आ सूरीश्वरजीना गुरुवरनुं पुण्याभिधान आचार्यदेव **श्रीविजयमानसूरीश्वरजी** महाराजा हतुं. तेओश्री तपा बिरुदथी अलंकृतना कारणे प्रख्यात शुभ निर्मळ तपागच्छीयमाना एक हता. पाठक प्रवर **श्रीलावण्यविजयजी** गणिवरे आ द्रव्यसप्ततिका अंगे–**"गंथंतरगाहाहिं समत्थिया दव्वसित्तरी एसा"** ए गाथा स्पष्टपणे निवेद्युं छे के–म्हें आ द्रव्यसप्ततिका नामा ग्रंथ इतर ग्रंथोनी गाथाओद्वारा समर्थित कर्यो छे. तेओश्रीए आम इतरग्रंथोनी गाथाओ क्या क्या ग्रंथमाथी चूंटी छे, ते पण 'श्री पंचाशकजी' 'श्री श्राद्धदिनकृत्य' इत्यादि महाग्रंथोना नामनो उल्लेख करवा विगेरे द्वारा केट-

लेक भले स्पष्टपणे निर्देश पण कर्यो छे. वृत्तिनी रचना करतां उपाध्यायजी श्रीलावण्यविजयजी गणिवर पूर्वे महापुरुषोए बनावेला महाग्रंथोगांना अमृतोद्धारने स्मरणमां लाव्या विना रह्या नथी. अने ते साथे ते ते महाग्रंथोनां नामो विगेरेनो उल्लेख पण तेओश्री कर्येज गया छे.

आ ग्रंथनी प्रमाणिकता सुंदर प्रकारनी छे. वांचक जोइ शकशे के—आ ग्रंथमां ठेरठेर 'श्रीपंचाशकवृत्ति, धर्मपरीक्षा, श्राद्धविधि, सम्यक्त्ववृत्ति, प्रश्नोत्तरसंग्रह, उपदेशपद, बृहद्भाष्य, संघाचारवृत्ति, विचारसारप्रकरण, बृहच्छांतिस्तोत्र, श्राद्धदिनकृत्य, महानिशीथसूत्र, त्रिषष्ठीशलाकापुरुषचरित्रनुं आग-पर्व, पद्मचरित्र, व्यवहारभाष्य, संबोधकुलक, छेदसूत्रभाष्य, जीतव्यवहार, संदेहदोलावली, श्रीप्रज्ञापनासूत्रभाषापद, निशीथचूर्णि, मूलशुद्धिप्रकरण, श्रीचंद्रकेवलीचरित्र, शत्रुंजयमाहात्म्य, आवश्यकसूत्र, श्राद्धजीतकल्प, सम्यक्त्वकुलक, व्यवहारसूत्र, श्रावकप्रज्ञप्ति, उत्तराध्ययनसूत्र, षोडशक, विगेरे महाग्रंथोनी साक्षीद्वारा आ ग्रंथनी प्रमाणिकता कोइ अनेरी भात पाडे छे. कयुं द्रव्य कइ रीतनुं गणाय ! ए विगेरेनुं स्पष्टीकरण शंकाशील आत्माओने शंका निवारण माटे अपूर्व रामबाण स्वरुप आ ग्रंथमां छापवामां आवेलुं छे. आगमसापेक्षपणे विविध प्रकारनी युक्तिओ पण आह्लादने उत्पन्न करावे तेवी छे. खरेज सुमार्गने नीरखी आनंद लहरी केम न वहे ! पण साथे सुवादना संगथी विरक्त, दुर्भाग्यवशे दुर्भागी बनेला, बिचारा पामर आत्माओने, के—जेओने सुंदर व्यवस्था सामे चेडां करवानो अभ्यास अने ओडकार छे, तेओने माटे आवा सुग्रंथो सुखाभावने निपजाववा समर्थ छे ? लगभग निखिल जगत् सूर्य आ-गमननी प्रातःकाले राह जोइ रहे छे, अने ते द्वारा जीवनयात्रानो सुसंयोग माने छे. पण ते सूर्यागमन बिचारा घूको, के स्तेनोने शूलस्वरुप निवडतुं होवाथी सुखाभाववाळुं होय, ए पण एक अटल अनादिनो प्रसार छे.

विशेषताए आसन्न भव्योने उद्देशीने फरमावायलां सदनुष्ठानो विगेरे ते ते प्रकारना सत्त्वोने सुगमताए महत्फळने नजदीकना समयमां समर्पनारां थाय छे. ए कारणे—"सवि जीव करुं शासनरसी" नी विशाळ भावनावाळा महापुरुषोए सदनुष्ठानोना संदेशाओ जगत्ने वारंवार संभळाव्या छे. ते महापुरुषोए

[illegible] पैकीनो चैत्यादिद्रव्यने आश्रयीने किंचित् संदेशो आ द्रव्यसप्ततिकाना गुंथनद्वारा जे जे रीते पाठव्यो छे, ते विचारवुं पण स्थानीय छे. आ द्रव्यसप्ततिका भेदद्वार, वृद्धिद्वार, विनाशद्वार, गुणद्वार, दोषद्वार, प्रायश्चित्तद्वार, अने दृष्टांतद्वार, एम सातद्वारथी मंडित छे. **१. भेदद्वार.** आ द्वारमां चैत्यद्रव्य, गुरुद्रव्य, ज्ञानद्रव्य, साधारणद्रव्य, अने धर्मद्रव्यनी निश्चयात्मक विचारणा विविवादपूर्वक करवामां आवी छे. मूळभेद तरीके आ पांच छे. अने तेना उत्तरभेद १५ छे, जे चोथी गाथामां सुंदर प्रकारे दर्शाव्युं छे. **२. वृद्धिद्वार.** आ द्वारमां चैत्यकार्यमां अधिकारी केटला गुणने धारण करनार होवा जोइए? देवादिद्रव्यना विशिष्ट अधिकारी कोण होइ शके? श्री जिनाज्ञा रहितपणे देवादिद्रव्यनी वृद्धिकारक वस्तुस्थितिथी अज्ञ होय, तो तेथी थती क्लीष्ट विडंबना, देवादिद्रव्यनी चिंतना शी रीते राखवी? विगेरे पांचमी गाथाथी बारमी गाथा सुधीमां फरमाव्युं छे. **३. विनाशद्वार.** आ द्वारमां देवादिद्रव्यनुं भक्षण करे, यावत् उपेक्षा करे, बीजाने खवाडे, अथवा मतिमंदपणाथी कोइने धीरवाथी थती दोषापत्ति, मोहबुद्धिए ते द्रव्यनो उपभोग करे, यावत् चोरी ले, तो तेथी नरकना आयुर्बंधनी थती क्लीष्ट आपत्ति, भाडुं न आपे, प्रतिज्ञा करेलुं द्रव्य न आपे, इत्यादिथी दूषित थइ अविवेकिना वचने ते द्रव्यनी उपेक्षा करे, तो तेने थती संसारनी वृद्धि साधु पण भक्षणादि दोषोने न निवारतां उपेक्षा करे, तो तेमनी पण थती अनंत संसारनी परिभ्रमणा. अने अनुमोदनने थती महानिर्जरा. ते अंगे शुध्यशुद्धि विचारणा. विगेरे. १३ मी गाथाथी २० मी गाथा सुधीमां प्रकाशवामां आवेलुं छे. **४. गुणद्वार.** आ द्वारमां देवादिद्रव्यनी वृद्धि करनार महासत्वोने आ लोकमां समृद्धि, कीर्ति, सुख, बळवृद्धिनी प्राप्ति तथा शक्तिवान्, शूरवीर, सर्वलक्षणोपेत, सद्बुद्धिशाली, सुशील, सर्वजन संमत एवा पुत्रनी प्राप्ति. अने परभवमां उत्कृष्टपणे तिर्थंकरत्वप्राप्ति. मध्यमपणे संसारनो अंत. जघन्यपणे परित्त संसारी, अने जगतनुं महद् उपकारीपणुं विगेरे. २१. मी गाथाथी २४. मी गाथा सुधीमा निर्देश्युं छे. **५. दोषद्वार.** आ द्वारमां देवादिद्रव्यना नाशकर्ताने दर्शनमोहनीयनो बंध. बोधिलाभरूप वृक्षना मूळमां जाज्वल्यमान अग्निनुं लगाडवुं. चैत्यादिद्रव्य विनाशथी श्रीजिनेश्वरादिनी आशातना थवाथी थती

अनंत संसारनी प्राप्ति. परभवमां दारिद्र्य, कोढादिरोगोत्पत्ति, जनतिरस्कार, पराभव, घात, भारकर्षण, कुट्टणादि अशुभ फळनुं पामवुं. ते द्रव्यनी चोरी विगेरे द्वारा साधुने आहारादि वहोरावे तो, ते साधुने अकल्प्य, तेथी थती महा गर्हा, प्रत्यनिकतानी प्राप्ति, आज्ञा विराधकता, संयम अने तपनो विच्छेद,. कुप्रवृत्ति प्रसंग दोष, चैत्यादि द्रव्यभक्षण कर्त्ताथी संयम–आत्म–प्रवचन–विराधना थाय माटे तेना संगनुं वर्ज्यपणुं. कोनो कोनो संग त्याज्य, विगेरे २५ मी गाथाथी ४४ मी गाथा सुधीमां वर्णव्युं छे. **६. प्रायश्चित्तद्वार.** आ द्वारमां जे जे अतिचारो लागेला होय तेने सद्गुरुवर समीपे प्रथम आलोची पछी पाक्षिकादि प्रतिक्रमण करवुं. आलोचना यथार्थ भावप्रकाशी करवी. आलोचना लेनार संवेगी, विनेकी, श्राद्ध सामाचारीमां स्थित अनाग्रही, श्रद्धालु,. आत्माधीन, आसेवनादि लक्षणेयुक्त, आशंसारहित विगेरे गुणोवाळो भव्य होवो जोइए. ते आलोचनादाता आचारशील, दोषने धारी राखे तेवा, शास्त्रव्यवहारनिपुण, आलोचना कारकनी शरमने सदुपदेशथी छोडावनार, योग्यतानुसार प्रायश्चित्त आपी धर्म–जागृति करावनार. देशकालादि जोनार सद्गुरु होवा' जोइए. ते साधु या श्रावकके आचार्य, सांभोगिक, असांभोगिक, गीतार्थ, पासत्था, अगीतार्थ जेवा, पश्चात्कृत, देवता, अरिहंत प्रतिमा पासे, अथवा अर्हत्‌ सिद्धनी सामे क्रमे क्रमे अभाव छते आलोयण लेवी. बे प्रकार. उत्कंठितपणाथी, अभिमानथी, प्रमादथी, यतनाथी, संघादिक कार्यथी, संभ्रमथी जे दोष लागेल होय तेनी यथास्थित आलोयण लेवी. आलोचना ग्रहणथी शुभभावनी वृद्धि अने सन्मार्गदर्शक सहायनी प्राप्ति, आलोचना शुभ स्थळादिमां लेवी। आलोचना दाता छतां स्वतः आलोचना लेतो शुद्ध थतो नथी, अने वधु दोषित बने छे. पाप प्रकाशनथी लघुता, हर्षोत्पत्ति, स्वपरदोषनिवृत्ति, सरलता; शुद्धता, श्रीजिनाज्ञापालन, शल्यभावादि आलोचना करवाथी गुणो प्राप्त थाय छे, ते लघुगुरु प्रायश्चित्तादि, ४५ मी गाथाथी ५९ गाथा सुधीमां निवेद्युं छे. **७ दृष्टांतद्वार.** आ द्वारमां वृध्यादि द्वारोने विशेषपणे पुष्ट करवाने माटे कथाओ कहेली छे. **२ वृद्धिद्वार**मां प्रसंग पामी संकाशनी कथा, बे श्रेष्ठीना पुत्रोनी कथा, महेन्द्रपुरीना एक श्रावकनी कथा, ऋषभदत्तकथा, देवसेनमातानी कथा, मल्लश्रेष्ठीनी कथा, आभडशेठनी कथानुं आलेखन करी वस्तुना भावोनुं

स्वरूपन वधु स्पष्ट कर्युं छे. ३ विनाशद्वारमां श्रीकालिकसूरीश्वरजी महाराज, श्रीभद्रबाहुस्वामिजी, श्रीवज्रस्वामिजी, कलिकालसर्वज्ञसूरिसिंह श्रीहेमचंद्रसूरीश्वरजी महाराज, श्रीमल्लवादीसूरीजीम०, श्रीविष्णुकुमार, श्रीधर्मघोषमुनीजी, सर्वानुभूति मुनिवरनी कार्यवाहीद्वारा विनाशनो अभाव पुष्ट करवामां आवेल छे. ४ गुणद्वारमां सागरश्रेष्ठीना कथाद्वारा चैत्यादिद्रव्य वृद्धिकारकने श्रीजिननामकर्मनो गुण दर्शाव्यो छे. ५ दोषद्वारमां रुद्रदत्तनी कथा. चंदकुमार प्रबंधद्वारा दोषथी थयेल आपत्ति, अने दोष निवारणथी थयेली अपूर्व सुखनी सामग्री विगेर सुंदर प्रकारे वर्णवेल छे. ६ प्रायश्चित्तद्वारमां सिद्धपुरना श्रावकनी संकाश नामना श्रावकनी कथा, कर्मसार अने पुण्यसारनुं निदर्शन, महाकाळना दृष्टांतद्वारा प्रायश्चित्त न लेनारानी अवनति, अने आलोचना लेनारनी प्रगतिथी आ विषयनुं हार्द पण सारुं खोल्युं छे. तत्वरुचिए सम्यक् श्रद्धानपूर्वक आ दृष्टांतो अवश्य—एकात लक्षपूर्वक मनन करवा योग्य छे.

उपर्युक्त रीते चैत्यादि द्रव्य अंगेना किंचित् संदेशानुं केवळ संक्षिप्त दिग्दर्शन अहिं कर्युं छे. विस्तृत तत्वपिपासु अने भवभीरुए श्री'दव्वसित्तरी' (द्रव्यसप्ततिका) नुं आगंत वाचन स्व–पर हितार्थे करवुं परमावश्यक छे. पाठक प्रवर ग्रंथकर्ता घणा भवभीरु छे. तेओश्रीए आ ग्रंथनी रचना कर्या बाद तर्कादि शास्त्रोना परम निपुण अने वैराग्यरुप अमृतना समुद्र पंडित मुनिप्रवर श्रीविद्याविजयजी महाराज पासे आ ग्रंथमां किंचिद् दोष पण न रहेवा पामे ते माटे सम्यक् संशोधन कराव्युं छे. आ ग्रंथनो रचना विक्रम संवत् १७४४ना आसो मासना शुक्लपक्षमा करी छे. भव्य सत्वो शुक्लपक्षना सितांशु तुल्य द्रव्यसप्ततिकाने धारण करो अज्ञान तमोपहारथी थती परमोज्वलताने पामी, धर्म कर्म सिंह बनो निखिल शांतिना धाम स्वरुप निवृत्तिस्थानने सत्वर पामो एम इच्छो विरमुं छुं.

सीपोर
वि० सं० १९९५
भाद्रवदद्वितीया

लि०
श्रमण जनकविजय

—: श्री विनय-भक्ति-सुन्दर-चरणग्रन्थमाला तरफथी तैयार थता ग्रन्थो :—

| ग्रन्थाङ्कः | नाम | किं |
|---|---|---|
| १ | श्री प्रत्येकबुद्ध चरित्रम् पद्य | ०—१०—० |
| २ | श्री बावीशपरीषह कथा ,, | १—०—० |
| ३ | श्री मूलदेवनृप चरित्रम् ,, | (प्रेसमां) |
| ४ | श्री अगडदत्त चरित्रम् ,, | ,, |
| ५ | श्री शान्तिनाथ चरित्रम् ,, | |
| ६ | श्री विष्णुकुमार ,, ,, | |
| ७ | श्री उदयनराजर्षि ,, ,, | |
| ८ | श्री दशार्णभद्रनृप ,, ,, | |
| ९ | श्री चित्रसम्भूतिचरित्रम् ,, | (प्रेसमां) |
| १० | श्री सनत्कुमार चरित्रम् ,, | |
| ११ | श्री द्रव्यसप्ततिका भाषान्तर भेट | |

प्राप्तिस्थान-पं० हीरालाल हंसराज—जामनगर.

१२ श्रीउत्तराध्ययनसूत्रम् १३—०—०
(श्रीभावविजयोपाध्याय वृत्तियुतम्) (प्रेसमां)

१३ श्री हैमधातुपारायणम्
(कलिकाल सर्वज्ञ श्री हेमचन्द्रसूरीश्वर विरचित) (प्रेसमां)

१४ श्रीश्राद्धप्रतिक्रमणसूत्रम् वृत्तित्रयोपेत्तम्
(श्री चन्द्रसूरि. श्रीतिलाचार्य. श्रीपार्श्वः टीकाकारा)

१५ श्री उणादिनाममाला (कोशः)
(श्री शुभशीलगणि विरचित अनेक अप्रसिद्ध शब्दोना संग्रह युक्त)

१६ श्री धर्मोपदेशमाला
(मछ० श्रीहेमचन्द्रसूरि शिष्य श्रीविजयसिंहसूरिकृतवृत्तियुता)

प्राप्तिस्थान—पं० मुरालाल कालीदास सरस्वती जैन पु०
भंडार १४५ गुलालवाडी मुंबइ

केशरबाइ ज्ञानमंदीर—पाटण (गुजरात)

॥ अर्हम् ॥

॥ श्रीशान्तिनाथाय नमः ॥

सकलसुविहितशिरोमणि–प्रशान्तमूर्ति–वयोवृद्ध–गीतार्थाग्रणि–जैनाचार्य श्रीमद्विजयसिद्धिसूरीश्वर सद्गुरुभ्यो नमः ॥

महोपाध्याय श्रीलावण्यविजयगणि विरचिता

# ॥ श्रीद्रव्यसप्ततिकावृत्तिः ॥

( स्वोपज्ञा )

इह ग्रंथारंभे ग्रंथकृत् शिष्टसमयपरिपालनाय विघ्नोपशांतये श्रोतृप्रवृत्तये च मङ्गलादिकं प्रतिजानीते—

सिरिवीरजिणं वंदिय, धम्मगुरुं तत्तबोहगं धीरम् । देवाइदव्वतत्तं, सुआणुसारे निरूवेमि ॥ १ ॥

(टीका) सिरिवीरत्ति–श्रीवर्द्धमानजिनं स्वधर्माचार्यं च वंदित्वा सम्यग् मनोवाक्कायैर्नत्वा प्रणिधायेत्यर्थः । देवादिद्रव्यतत्त्वं देवादिद्रव्यस्य स्वरूपं निरूपयामि विविच्य वक्ष्ये इति क्रियाकारकसंटंकः । केन श्रुतानुसारेण श्राद्धदिनकृत्यादिग्रंथानुसारेण । अत्र प्राकृतत्वात् तृतीयार्थे सप्तमी । कीदृशं वीरजिनं गुरुं च तत्त्वबोधकं अनुग्रहधीप्रयुक्तसदागमोपदेशतस्तथा भव्यानां यथावस्थितत्त्वबो-

धजनकं 'अनेनोभयत्र' परंपरया साक्षाच्च परोपकारत्वं दर्शितं ।' पुनः कीदृशं धीरं मरणांतकष्टोपनिपातेप्यनुत्सूत्रप्ररूपकस्वभावमनेनोभयत्र सुगुरुत्व सूचितं । यदुक्तं विशेषावश्यके "उस्सुत्तभासगाणं, बोहिनासो अणंतसंसारो ॥ पाणच्चएवि धीरा, उस्सुत्तं तो न भासंति ॥ १ ॥ तत्त्वतः स्वोपकारकत्वमपि भावितं ।' अत्र श्रीविरजिनं तत्त्वबोधकं चेति पदद्वयेन सद्भूतार्थप्रतिपादनपरेण चत्वारो भगवदतिशयाः प्रकाशिताः । तत्र श्रीशब्देन ज्ञानातिशयः, 'वीरमित्यनेन' पूजातिशयः, जिनइत्यनेनापायापगमातिशयः, तत्त्वबोधकमित्यनेन वचनातिशयः । तदेवं चतुरतिशयप्रतिपादनद्वारेणोभयोरेकत्वदर्शनेन च गुरुदेवयोः पारमार्थिकीफलोपहितप्रणिधानयोग्यतामिहितेति भावः तथा प्रयोजनादिनिरुपणं च लोकाद्भाव्यमिति ॥ १ ॥

अथ देवादिद्रव्यपदवाच्यमाह—

ओहारणबुद्धीए, देवाईणं पकप्पिअं च जाया । जं धणधन्नप्पमुहं, तं तद्दव्वं इहं णेयं ॥ २ ॥

(टीका) ओहारणेत्ति–अवधारणबुद्ध्या भक्त्यादिविशिष्टनियमबुद्ध्या देवादिभ्यो यत् धनधान्यादिकं वस्तु यदा यत् कालावच्छेदेन प्रकल्पितं उचितत्वेन देवाद्यर्थं एवेदं अर्हदादिपरसाक्षिकं व्यापार्यं न तु मदाद्यर्थे इति प्रकृष्टधीविषयीकृतं निष्टाकृपमिति यावत् तदा तद् इह अत्र प्रकरणे तद्द्रव्यं तेषां देवानां द्रव्यं देवादिद्रव्यं ज्ञेयं बुधैरिति शेषः । एवं सति संकल्पितमात्रमर्हदादिदृष्टिमात्रपतितं च देवादिद्रव्यं न भवतीति तत्त्वं । तेन नैवेद्यपूजार्थं संकल्पितमपि स्वनिष्ठितमशनादिकं सपरिकरमृगाभिधद्विजश्राद्धेन साधुभ्यो विधिवद् दत्तं महाफलायाभूदन्यथोभयेषां स्फुटं दोषोपपत्तिः स्यात् । यदुक्तं वसुदेवहिंडिका २ खंडे संघाचारवृत्तौ च "कौसलजणवए संगयसंनिवेशे जिणभत्तो गासच्छायणमितभोई मिगो नाम बंभणो परिवसइ । तस्स तारिसी मइरत्ति

पिया । मुया वाणिज्ति । कयाऽमिगेणाणुन्ना भद्दे करे हि देवकए भत्तं[1] । जउ चउहागमे पूया भणिया । तथाहि तित्थयरो अरिहंतो तस्स चेव भत्ति कायव्वा माय पूआवंदणाइहिं भवइ । पूयंपि पुप्फामिसथुइपडिवत्तिभेअओ चउव्विहं पि जहामत्तिए कुज्जत्ति" अत्र यथासंभवमविकलाप्तोपदेशपरिपालना प्रतिपत्तिः । तओ पुप्फपूआओ नेविज्जउयापवरेत्ति मन्नंतीए तीए देवकज्जे सज्जियं भोयणं, माहवो अउवागया पचक्खं मुक्ख मग्गो इव तिण्हवि जणाण समवाओ पडिलाभेमुत्ति वड्ढमाण भावेहिं तेहिं साहवो पडिलाभिया । गिण्हंति मुणी वि किंचि तेसिं सुहभाव वुड्ढित्थं । अत्र विशेषार्थो बृहत्कल्पभाष्यतो भाव्यः । तो पूआदाणफले, णेवं तिण्हंपि तेसि संजायं, रायकुले भोगफलं, जस्स महो पूयमाहप्पं १ । तथा । तवनियमेण य मुक्खो, दाणेण य हुंति उत्तमा भोगा । देवच्चणेण रज्जं, ऽणमणमरणेण इंदत्तं २ । ततो भवांतरे च मृगद्विजादयो मुक्तिं प्रापुरिति । अत एव पूजातः प्राग् देवपूजासत्कस्वचंदनभाजनात् पात्रांतरे हस्ततले वा गृहीतचंदनेन कृतभूषणः श्राद्धो देवानर्चयेत् तथा स्वगृहदीपोऽपि देवदर्शनार्थमेव देवाग्रे आनीतो देवसत्को न स्यात्, तथा देवाग्रे ढोकितं नैवेद्यपात्रादिकमपि देवसत्कं न स्यात् तथोचितनव्यान्नपक्वान्नफलादेर्देवस्य पुरो ढोकनं साधोर्निमंत्रणं च विना स्वयमग्रहणमिति यावज्जीवनियमे सति तदकरणे नियमभंगः नियमाभावे तु तदनिवेदने भक्तिभंगाशातना स्यात् । न तु देवदृष्टौ देवसत्कं तेन न देवद्रव्यभक्षणदोषप्रसंग इत्यादि विधिनिषेधवादोऽपि घटते इति २.

अथ सप्तद्वारैर्देवादिद्रव्यप्ररूपणां दर्शयति—

**भेया वुड्ढी णासो, गुण दोसा पायच्छित्त दिठंता । एएहिं दुवारेहिं, एअस्स परूवणा णेया ॥ ३ ॥**

१ अत्र गौणाऽमुख्यत्वयोर्भेदः गौणत्वे स्वनिश्रापि अन्यथादाने दाने च उभयोरुभयोर्दोषापत्तिः ।

(टीका) भेअत्ति तत्र शैक्षशिक्षप्रयोजका द्रव्यप्रकारा भेदाः १ सम्यग्चिंतापूर्वा स्वधनादिप्रक्षेपविधिना तदुपचितिर्वृद्धिः २ लोभाद्युदयोदीरितभक्षणोपेक्षणादिना तद्धानिविनाशः ३ तयोः करणं वारणादिना पुण्यानुबंधिपुण्यादेर्लाभो गुणः ४ तद्विनाशोद्वेलित-पापानुभावो दोषः ५ तद्विशोधकोऽनुष्ठानविशेषः प्रायश्चित्त ६ क्रमात् गुणदोषयोः प्रवृत्तिनिवृत्तिदार्ढ्यार्थं निरूपितमुदाहरणं दृष्टांतः ७ एतैर्वृद्धिस्थैर्द्वारैरेतस्य देवादिद्रव्यस्य प्ररूपणा ज्ञेया, सम्यग्ज्ञानविषयी कार्या ॥ यतः सम्यग्ज्ञानत एव सम्यक्प्ररूपणाप्रतिपत्तिश्च भवतीति भावः ॥ ३ ॥

अथोद्देशानुक्रमेणादिशब्दनियमितं मूलोत्तरान्वितं भेदद्वारमाह—

तं णेयं पंचविहं, चेइयदव्वं च गुरुअदव्वं च । नाणं साधारणगं, धम्मं पत्तेय तं तिविहं ॥ ४ ॥

(टीका) तेणेयमिति । तद् देवादिद्रव्यं ज्ञेयं पंचविधं निश्राविषयभेदात् पंचप्रकार तद्यथा । चैत्यद्रव्यं १ गुरुद्रव्यं २ ज्ञानद्रव्यं ३ साधारणद्रव्यं ४ धर्मद्रव्यं ५ च । तथा तत् मूलभेदभिन्नं देवादिद्रव्यं च प्रत्येकं त्रिविधं जघन्यादिभेदेन त्रिप्रकारं भवति । अयं भावः। चैत्यस्यार्हद्बिंबस्य निश्रितं द्रव्यं देवद्रव्यमित्यर्थः। अत्र "चैत्यं जिनोकस्तद्बिंबे चैत्यो जिनसभातरुरिति" हैमवचनात् । सपरिकरप्रसादो वास्तुरूपत्वेन देवद्रव्यांतर्भूतत्वात् पृथक् नोक्त इति । तच्च यथार्हमूल्याद्यपेक्षयात्रिधा। जघन्य १ मध्यमं २ उत्कृष्टं च ३ । तत्र नैवेद्यमृतवंशोपकरणादि जघन्यं द्रव्यं १ वस्त्रधातुकाष्टभाजनोपकरणचतुःपदादि मध्यं द्रव्यं २ कनकरूप्यमौक्तिकवास्तु-क्षेत्रादि उत्कृष्टं द्रव्यं ३ । १ एवं यथासंभवं गुरुद्रव्यं भाव्यं २ भीमेतिभीमसेनन्यायात् । ज्ञानं ज्ञानद्रव्यं पुस्तकद्रव्यमित्यर्थः ३ तथा साधारणद्रव्यं चैत्यपुस्तकापद्गतश्राद्धादिसमुद्धरणयोग्यं ऋद्धिमच्छ्रावकमीलितं भांडागाररूपं क्षेत्रद्रव्यमित्यर्थः । तदपि पूर्ववत्त्रिधाभाव्यं

४ धर्मद्रव्यं प्रायः साधारणधिया चैत्यादि १२ धर्मस्थाने[1] यथाशक्तिव्ययनिमित्तं परिज्ञातं द्रव्यं । तदपि त्रिधा एवं पंचदशभेदाः स्युरित्यर्थः । अत्रैकत्वे सति अनेकसंबंधित्वं साधारणत्वं तच्च नियतकर्तृविषयापेक्षया उत्तरं त्वनियतोभयापेक्षया च भेद्यं । अथवा निश्राकाले कार्यकाले वा प्रवर्त्तकथीभेदात् विषयभेदाद्वा सर्वत्रापि भेदः स्वधिया स्फुटं बोध्यः । तथात्र जघन्यादिद्रव्यविस्तारो वृद्धिनाशप्रायश्चित्तविवरणावसरे वक्ष्यते ॥ ४ ॥

## ॥ इति समाप्तं प्रथमं भेदद्वारं ॥

अथैषां वृद्धौ वक्ष्यमाणं सत्फलमुदेतीति वृद्धिद्वारनिरूपणार्थं चैत्यकारणाधिकारिगुणोपलक्षणेन पंचाशकगाथाभ्यामादौ सामान्यतस्तदधिकारिणं निरूपयति.

अहिगारी य गिहत्थो, सुहसयणो वित्तमं जुओ कुलजो । अरकुद्दो धिइवलिओ, मइमं तह धम्मरागी य ।५।
गुरुपूजाकरणरई, सुस्सूसाइगुणसंगओ चेव । णायाहिगयविहा, णस्स धणियमाणापहाणो य ॥ ६ ॥

(टीका) अहिगारित्ति । गुरुपूजत्ति । अत्रोत्सर्गत ईदृग्गुणो गृहस्थः प्रायोऽधिकारी देवादिद्रव्यवृद्धिकर्त्ता जिनैरुक्तः । तद्यथा । कीदृग् गृहस्थः, सुखस्वजनः अनुकूलकुटुंबादिवर्गसहितः १ वित्तवान् न्यायार्जितऋद्धिमान् २ युक्तः राजसत्कारादियोग्यः प्रत्यनी-

१ गुरुतया गुरुनिश्राणि क्षेत्राणि सप्त तस्मिन् श्राद्धविधानुसारेण निश्राकाले कार्यकाले प्रयोक्तुरवष्टंभ वृद्धिरूपौ द्वौ भेदौ श्रीराजप्रश्नीयपयोगशास्त्रानुसारेण आनुकूल्या पश्चात्तदनुसारेण च पौषधशालासारीपदरूपौ द्वौ च भेदौ सर्वद्वादश ॥

कादिनाऽपरिभूत इति यावत् ३ कुलजः सद्वंश्यः कृतप्रतिज्ञानिर्वाहकः ४ अक्षुद्रो दानशौंडः ५ धृतिबलिकः चित्तसमाधानलक्षणसामर्थ्ययुक् ६ तथा ज्ञाता विद्वान् प्रस्तुतविधानस्य चैत्यद्रव्यादिवृद्धिविधेरित्यर्थः ७ आज्ञाप्रधानः आगमपरतंत्रः ८ धर्मासक्तः ९ गुरुभक्तिरतः पूजनीयसेवापरायण इत्यर्थः १० शुश्रूषादिगुणैः संगतः विवेकीत्यर्थः ११ मतिमान् स्वतः प्रशस्तधीमान् १२ अयं[1] भावः ईदृशः श्रद्धानतः सानुबंधसत्फलाः चैत्यद्रव्यादिवृद्धिव्यवहाराः सुसाध्याः स्युः तत्प्रतिकूलाभक्षणादिदोषा अपि निवार्याः स्युः । विसदृशस्तु ते दुःसाध्या एव ततो यस्य यथा सामर्थ्यं स तत्र तथा प्रवर्त्तते इति ५ ॥ ६ ॥

॥ अथात्रैव विशेषतस्तदधिकारिणो निरूपयति ॥

मग्गाणुसारिपायं, सम्मद्दिट्ठीतहेव अणुविरई । एए हिगारिणो इह, विसेसओ धम्मसत्थंमि ॥ ७ ॥

(टीका) मग्गाणुत्ति । भवाभिनंदिदोषरहितो मित्रादिदृष्टिसहितः शमसंवेगाद्युपलक्षितः तथाविधमंदमिथ्यात्वकषायोदयभाग् भजनया च जैनक्रियावान् तथाभव्यो मार्गानुसारी स्यात् । यदुक्तं धर्मपरीक्षादौ । " मग्गाणुसारिभावो, आणाए लक्खणं मुणेयव्वं । किरिया तस्स न णियया, पडिबंधे वाविउवयारे १ तत् तत् तत्त्वानुकूलप्रवृत्तिहेतुपरिणामो मार्गानुसारिभावः । सैव द्रव्याज्ञाप्युच्यते । तत्र माषतुषतामल्यादिवत् अन्वयव्यतिरेकाभ्यां दर्शनक्रिया न नियता । एतेन मार्गानुसारिणां द्रव्यतो जैनक्रियानियमो निरस्त इति १ एषा मार्गानुसारिता चोत्कर्षतः चरमावर्त्तेऽपि प्रवर्त्तते । यदुक्तं तत्रैव "मग्गाणुसारिभावो पुग्गलपरिअ-

1 अग कार्य कारणयोः सबंध दर्शयितु पश्चानुपुर्व्या कतिचिद्गुणाद्दर्शिताष्टीकाकृतिः ॥

दूए मुणेयव्वो। गुणवुड्ढीए विगमे भवाभिनंदीण दोसाणं" १ अत्र चरमपुद्गलावर्त्त प्राक्कालवर्तिनोऽनंतानुबंधिकषायादिविपाकरूपाः क्षुद्रत्वादयो दोषा भवाभिनंदिन उच्यंते इति २ तथा मिथ्यात्वोदयरहितत्वे सति केवलनिःशंकितादिगुणसहितो भव्यो ऽविरतसम्यग्दृष्टिः २ भवोद्वेगादिगुणवत्त्वे सति अप्रत्याख्यानावरणक्षयोपशमजन्यविरतिभव्यो देशविरतिः ३ एते इह तद्वृद्धयधिकारे विशिष्टाधिकारिणो धर्मशास्त्रेण पचाशकाद्यनुसारेण प्रायो ज्ञेया इति शेषः। पुष्टालंबने तु साधवोप्यधिकारिणोऽग्रे वक्ष्यंते ॥ ७ ॥

अथ क्रमात्सप्रतिपक्षविध्यपेक्षककर्तृद्वारेण फलोपहितां वृद्धिं दर्शयन् प्रसंगतो विनाशमपि दर्शयति।

जिणवरआणारहियं, वद्धारंतावि केवि जिणदव्वम् ॥ वुड्डंति भवसमुद्दे, मूढा मोहेण अन्नाणी ॥ ८ ॥

(टीका) जिणेत्ति। अत्र तंत्र न्यायेन व्याख्यानं द्विधा कार्यं। तत्र विधिपक्षे सर्वत्र प्रायोऽकारविश्लेषात् जिनाज्ञयाऽरहितं सहितं देवादिद्रव्य वर्द्धयंतः केचिदनिर्वचनीयगुणाः अमूढाः विवेकिनः अमोहेन मेदज्ञानेन आज्ञान्यः अर्हदाद्याज्ञामात्मनि नयंतीति अर्हदादि आज्ञाराधकाः भवसमुद्रे अ-न निमज्जंति तरंतीत्यर्थः। विधिपक्षे तु यथाश्रुतं व्याख्येयं। अत्रेदं हार्दं श्रीआप्ताज्ञानुसारिण्युचितार्थक्रिया विधिः स्वच्छंदानुसारिणि चाविधिरतः कर्मादानादिकुव्यापारवर्ज्जसद्व्यवहारादिविधिनैव तद्वृद्धिः कार्या १। केनितु श्राद्धव्यतिरिक्तेभ्यः समधिकग्रहणकं गृहीत्वा कलांतरेणापि तद्वृद्धिरुचितैवेत्याहुरिति। सम्यक्त्ववृत्त्यादौ संकाशकथायां तथोक्तेः। एवं सति परः प्राह। ननु देवद्रव्याधिकारे कथं श्राद्धेन देवद्रव्यवृद्धिं कर्त्तुं शक्यते। यतो "भक्खंतो जिणदव्वं, अनंतसंसारिओ भणिओ" इति जानन्नपि आत्मव्यतिरिक्तानां यच्छत्रुभयेषां संसारवृद्धिं प्रतिकारणता भवति। न हि विषं

कस्यापि विकारकृन्न स्यादिति वाच्यं। प्रायः सर्वेषामपायकृदेव स्यात् ग्रंथांतरे आलोचनाधिकारे मूषकादीनामपि दोषोत्पत्तिरुक्तास्ति। तदत्र वृद्धिं प्रति का रीतिरत्रोच्यते। मुख्यवृत्त्या श्राद्धानां देवद्रव्यविनाशनमेव दोषः। कालोचितव्याजादिदानपूर्वकग्रहणे तु न भूयान् दोषः। समधिकव्याजादीदाने पुनर्दोषाभावोऽवसीयते। तद्विनाशे तु दुर्लभबोधिता। तद्रक्षादिदेशनादानोपेक्षणादौ साधोरपि भवदुःखं च शास्त्रे दर्शितमस्ति। तेन तदभिज्ञाना श्राद्धाना प्रायस्तस्याव्यापारणमेव श्रेयः। मा कदाचित् प्रमादेन स्वल्पोऽप्युपभोगो भवतु इति सुस्थानस्थापनया प्रत्यहं सारादिकरणपुरस्सरं महानिधानवत् तत्परिपालने च तेषां न कोपि दोषः किंतु तीर्थकृन्नामकर्मनिबधनादिविशिष्टलाभ एव ६। एवं सति तेषा यत्तद्वर्जनं तन्निःशूकतादिदोषसम्भवपरिहारार्थं ज्ञेयं तेनेतरस्य तद्भोगविपाकानभिज्ञस्य निःशूकताद्यसंभवात् वृद्धयर्थं समधिकग्रहणकग्रहणपूर्वकसमर्पणे न दोषः। आगामिनिर्धनत्वापदादिसंभवेऽपि मूलधनस्य विनाशाभावात्। सशूकादौ तु वृद्धयाद्यर्थे समर्पणव्यवहाराभावात् तेषां तद्भक्षणे दोष एवेति ४। तथा कदाचित् उक्तप्रकारेण यदा सुश्राद्धा अपि स्वयं तद्वर्द्धयितुं न शक्नुवंति तदाक्षतपूगीफलनैवेद्यादि देवद्रव्यविक्रयोत्थद्रव्यवत् तद्धनेनैवोचितपृथग्व्यापारकरणेन लब्धं धनं साधर्मिकाणामुक्त्वा देवद्रव्यादौ प्रक्षेप्यं न तु स्वधनादौ। तद्धानिरपि तेषामग्रे वाच्या तत्प्रतीकारार्थमिति २। तथा यदोक्तप्रकारेणेतरगृहेऽपि ग्रहणकग्रहणपूर्वकतद्वृद्धिसंभवो न स्यात् तदौचित्यव्याजादानपूर्वकमेव तद्गृहे तद्धनं यथाकालावधि सभूय सुश्रावकैर्मोच्यं। ततो अप्रमत्तास्ते तद्धनं तथा प्रकारेण गृहांतरं परावर्त्तयंतः।सारादिकं कुर्वंतः प्रवर्त्तयेयुः ५। अत्रोत्सर्गापवादेन भावना कार्या। एवमादिवृद्धिप्रकाराभावात् सर्वथा विनाशसंभवे तु महानिधानवत् रक्षणीयमेव। न तु वृद्धयर्थं क्वचिदपि मोच्यमिति। श्राद्धविधि सम्यक्त्ववृत्ति प्रश्नोत्तरसंग्रह वृद्धवादानुसारेण विधिपूर्वकैव वृद्धिस्तथाभव्यानां संपूर्णफला यशस्करी भवति।

अविधिना च विहिता कालांतरे समूलं चैत्यादिद्रव्यं विनाशयति । यतः " अन्यायोपार्जितं द्रव्यं, दश वर्षाणि तिष्ठति । प्राप्ते च षोडशे वर्षे, समूलं च विनश्यति । " यतो लोकेऽपि वृद्धिवाणिज्यसेवाभोजनशयनासनविद्यासाधनगमनं वंदनादिकं च द्रव्यक्षेत्रकालादिविधिना विहितं पूर्णफलवन्नान्यथा सामग्रीवैकल्यात् । यदुक्तमुपदेशपदादौ आसन्नसिद्धिआणं, विहिपरिणामो उ होइ सयकालं । विहिचाओ अविहिभत्ती, अभवजियदूरभव्वाणं ॥१॥ धन्नाणं विहिजोगो, विहिपक्खाराहगा सया धन्ना । विहिबहुमाणी धन्ना, विहिपक्खअदूसगा धन्ना ॥२॥ विहिसारं चिअ सेवइ, सद्धालूसत्तिमं अणुट्ठाणं । दव्वाइदोसनिहओवि, पक्खवायं वहइ तंमि ॥३॥" लोकेऽपि श्रूयते "विधिपूर्वं कृतं कार्यं, संपूर्णफलसिद्धये । विपरीतं च तुच्छं स्यात्, श्रेष्ठिनंदनयोरिव ॥ ४ ॥ " तद्यथा । कांचनपुरे द्वौ श्रेष्ठिसुतौ द्रव्यार्थिनौ एकं सिद्धपुरुषं भक्त्या भजतः स्म। एकदा तुष्टेन तेन सम्यग्विधिसहितानि तुंबीफलानि सप्रभावाण्यर्पितानि। तथाहि शतवारकृष्टे क्षेत्रे निरातपस्थले उक्तनक्षत्रवारयोगे वाप्यानि वल्लीनिष्पत्तौ च कियंति बीजानि संगृह्य सपत्रपुष्पवल्ली क्षेत्रस्थैव दह्यते । तद्भस्म एकगद्याणकप्रमितं चतुःषष्टि गद्याणकताम्रमध्ये क्षिप्यते जात्यं हेम स्यादिति सिद्धेन शिक्षितौ तौ गृहमाययतुः । ततस्तयोर्मध्ये एकेन यथोक्तविधौ कृते जात्यं हेम जज्ञे । अन्येन विधिरीपन्न्यूनीचक्रे तस्य रूप्यमेवातः सर्वत्र सम्यग्विधिरेवोचितः । अविधिस्तु निःशूकतया विहितोऽनर्थायैव । यतः "जह भोयणमविहिकयं विणासए विहिकयं जियावेइ । तह अविहिकओ धम्मो, देइ भवं विहिकओ मुक्खं ॥१॥ हरिऊणय परदव्वं, पूय जो कुणइ जिणवरिंदाणं । दहिऊण चंदनतरुं कुणइ इंगालवाणिज्जं ॥२॥" न चैवं संप्रति धर्मो नैवकर्त्तव्यतयापन्न इति वाच्य अपरिहार्यविधेः सुप्रतिकार्यत्वात् । यतः अविहिकयावरमकयं, उस्सूअवयणं भणंति सव्वण्णू ॥ पायछित्तं जम्हा, अकए गुरुअं कए लहुअं ॥ १ ॥" अत एव सकलपुण्यक्रियाप्रांते अविध्या-

शातनानिमित्तं मिथ्यादुःकृतं दातव्यमेवेति । किंच सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवतीति सूरयः यदाह । अभ्यासो हि प्रायः, प्रभूतजन्मानुगो भवति । शुद्ध इति संस्कारद्वारेत्यर्थः । बाह्योपि अभ्यासो हि कर्मणां कौशलमावहति नहि सकृन्निपातमात्रेणोदबिंदुरपि ग्रावणि निम्नतामादधातीति तत्त्वम् ॥ ८ ॥

अथ विधिवत् श्राद्धदिनकृत्याद्यनुसारेण चिंतामपि निरूपयंस्तौ दर्शयति—

मू०—समये सड्ढो चिंतइ, चेइयमाईव दुच्छियं अन्नं । उग्गाहिणी उ सययं, दव्वु व्वुड्ढी न अन्नहा ॥९॥

(टीका) समयेति-समये एकाद्यंतर दिवसादिप्रस्तावे कदाचिदित्यर्थः । तथाविधश्राद्धः चिंतयेत् सारणादिविधिना पर्यालोचनापूर्वं सारयेत् । चैत्यादीन् आदिशब्दात् चैत्यप्रदेशप्रमार्जनादिग्रहणं अथवा अन्यं चैत्यादिपरिचारकदेवार्चकमाहारिकादिकं दुःस्थितं स्वस्वव्यापारासमर्थमल्पाजीविकया वा दुःखितं संतं चिंतयेत् । देवादिद्रव्योद्ग्राहणीं तु सततं चिंतयेत् यतो देवादिद्रव्यस्यातिशयेन वृद्धिः स्यात् । विपक्षे दोषमाह ॥ अन्यथोक्तचिंताभावे तु उक्तवृद्धिर्नैव । इयमत्र भावना । देवगुर्वोर्व्यवहारतोऽर्हत्शासनस्य मूलत्वात् पूर्वं यथावसरं विवेकिना सपरिकरचैत्यचिंता कार्या । तत्रापि जीर्णचैत्योद्धारविषया विशिष्टफलदा । यदाह । अप्पा उद्धरिओ च्चिअ, उद्धरिओ तहय तेहिं नियवंसो ॥ अन्ने य भवसत्ता, अणुमोअंताओ जिणभवणं" ॥१॥ "खविअं नीयागोअं, उच्चागोयं च बंधिअं तेहिं । कुगतिपहो निट्ठविओ, सुगइपहो अज्जिओ तहय" ॥२॥ "इहलोगंमि सुकीत्ति, सुपुरिसमग्गो अ देसिओ होइ।

१ चैत्यसेवाप्रमार्जनादिक्रियाविधायकम् ।

अर्भिं भव्वाणं, जिणभवणं उद्धरंतेण " ॥ ३ ॥ "सिज्झंति केइ पुरिमा, भवेण सिद्धत्तणं च पावंति । इंदसमा केइ पुणो, सुरसुक्खं अणुहवेऊणं" ॥ ४ ॥ अतः सुधादिना चैत्यं संस्कार्यमिति । अतश्चैत्यप्रदेशसंमार्जनपूजोपकरणसमारचनप्रतिमापरिकरादिनैर्मल्यापादनविशिष्टपूजाप्रदीपादिशोभानिर्मापनाक्षतनैवेद्यादिवस्तुस्तोमरक्षापनचंदनकेशरधूपघृतादिसंचयनदेवादिद्रव्योद्ग्राहणिकाकरणतत्प्राप्तक्षसुस्थानस्थापनतदायव्ययादिसुव्यक्तलेख्यकविवेचनसमुद्गकायव्ययस्थानादिसंरक्षणकर्मकरस्थापनसाधर्मिकगुरुज्ञानधर्मशालादेरपि यथोचितचिंतया यथाशक्ति यतनीयं। एवं ऋद्धिमत् श्राद्धेन तु विमलाचलादिमहातीर्थस्यापि रक्षोद्धारकरमोचनादिविधिना सारणा कार्या । एतावता प्रसंगतश्चैत्यादिचिंताकृत्यविधिरपि निर्णीत इत्यपि सिद्धं । न हि देवगुर्वादीनां श्रावकं विना प्रायोऽन्यः कश्चिच्चिंता कर्त्तास्ति । तथा सति जातु चौराग्न्याद्युपद्रवाद् देवादिद्रव्यं विनश्यति तदापि चिंताकर्त्ता निर्दोष एवावश्यंभाविभावस्याप्रतिकार्यत्वादिति । तत्रापि या या चैत्यचिंता स्वल्पममत्वसाध्या सा द्वितीयदिनेऽपि विधिक्रियार्वाग्विधेया शेषा तु पश्चादपि यथावद्व्याक्षिप्तकाले । एतदेव गार्हस्थ्यसारं यदाह "तं नाणं तं च विन्नाणं, तं कलासु अ कोसलं । सा बुद्धि पोरिसं तं च, देवकज्जेण जं वएत्ति ॥१॥ " तथैव उद्ग्राहणिकाचिंतेव विशेषतो देवादिद्रव्यवृद्धिप्रयोजिका भवतीति । तच्चिंताकारकैरुद्ग्राहणिकासु अभग्नचित्ततया स्वद्रव्यवत् देवद्रव्यादानमपि कार्यं। अन्यथा बहुविलंबे दुर्भिक्षदेशभंगदौःस्थ्यापातादेरपि संभवात् बहूपक्रमेऽपि तदसिद्धेः। तथा च महान् विनाशदोष आपद्यते महेन्द्रपुरीयश्राद्धवत् । तथाहि । माहेन्द्रपुरे अर्हच्चैत्यचंदनभोगपुष्पाक्षताद्यर्थं देवद्रव्योद्ग्राहणिकायां श्रीसंघेन नियोजिताः चत्वारः चिंताकारिणः श्राद्धाः सम्यक्चिंतां कुर्वन्ति। अन्यदा मुख्यचिंताकृदुद्ग्राहणिकाकरणादौ यत्तद्वचनश्रवणादिना दूनश्चितापा शिथिलीभूतः । ततो मुख्यानुयायिनो व्यवहारा इत्यन्येऽपि शिथिलीभूताः । तावताऽकस्मात् देशभंगादिना बहुदेवद्रव्यं

विनष्टं । ततः प्रमादेन सद्बलवीर्यगोपनात् सानुबंधपापकर्मणासावसंख्यभवान् भ्रांत इत्येवं निर्विलंबसमुद्ग्राहणिकस्यापि देवादिलभ्यं
श्रावकादिभ्यः सोत्साहं सुश्रावकैर्ग्राह्यं । स्वयं चापि निर्विलंबं देवादिदेयं देयं न तु क्षणं स्थाप्यं । अन्यस्यापि देयस्य प्रदाने विवेकिभिः
सर्वथा न विलंब्यते किं पुनर्देवज्ञानादेरेवं सति यदा च येन यावता मालापरिधापनादि कृतं तदा तावताऽन्यदपि देवादिद्रव्यं जातं
तच्च तेन कथमुपभुज्यते कथं वा तल्लाभादि गृह्यते पूर्वोक्तदेवादिद्रव्योपभोगप्रसंगात् तस्मात्सद्य एव तदर्पणीयं । यस्तु सद्योऽर्पयितु
मशक्तस्तेनादावेव पक्षार्धपक्षाद्यवधिः स्फुटं कार्यः । अवधिमध्ये च स्वयमर्प्यं मार्गणादि विनापि अवध्युल्लंघने च देवादंतरा पापोद-
यात् देवादिद्रव्योपभोगदोषः स्फुटं स्याद् वृषभदत्तवत् तथाहि । "महापुरे महेभ्यः श्रेष्ठी ऋषभदत्तः परमार्हतः पर्वणि चैत्ये गतः
पार्श्वे द्रव्याभावात् उद्धारके परिधापनिकार्पणं प्रतिपेदे सद्यश्च तेनान्यकार्यव्यग्रेण सा नार्पिता । अन्यदा दुर्दैवात् तद्गृहे धाटी प्रविष्टा
सर्वस्वं लुंटितं श्रेष्ठी च लुंटाकैर्हतो मृत्वा तत्रैव पुरे निर्दयदरिद्रकृपणमहिषवाहकगृहे महिषोऽभूत्। तत्रापि च तदा नीरादिभारं प्रति-
गृहं वहन्नुच्चैस्तरभूचटनाहोरात्रभारवहनबहुक्षुत्तृट्सदानिर्दयनाडीघातादिभिर्महाव्यथाश्चिरं सेहे । सोऽन्येद्युर्नव्यनिःपद्यमानचैत्यजगती
कृते जलं वहंश्चैत्यार्चादिकं दृष्ट्वा जातजातिस्मृतिश्चैत्यं कथमप्यमुंचन् ज्ञानिवचसा प्राग्भवपुत्रैर्द्रव्यं दत्त्वा महिषपालकान्मोचितः । ततः
सहस्रगुणितेन प्राग्भविकदेवदेयदानेन च तैरनृणीकृतोऽसावनशनेन स्वर्गतः । क्रमान्मोक्षं चेति । तेनोभयत्र विलंबो न कार्यः ।
तथा सति विशेषतो देवद्रव्यादेर्वृद्धिः प्रवर्त्तते । स्वस्मिंश्च तदभ्यासे हि सावधानत्वेन तद्विरोधिकर्मस्वदोषपरिहारपूर्वाणां स्वनियमनि-
र्वाहापूर्वगुणशुद्धिविशेषधर्मार्जनादिगुणानां स्थिरसंवासो भवेत् । तथार्चकादीनामपि स्वस्वकार्योत्साहवृद्ध्यर्थं तथा तथा स्वधनादिना
वृत्तिसाहाय्यं तथाविधश्राद्धैर्देयं यथा यथा चैत्यादेः स्वस्वकार्येऽप्रमत्ताः स्वप्रमोदाः संतः प्रवर्त्तेरन् । एवं सम्यक्चिंताद्यभावे तु

नैन्यादिविनाशादिदोषा आभवेयुस्ततः प्रमादतः पूर्वोक्तचिंता न मोच्या सद्भक्त्युल्लासाद्यनुबंधादिति ॥ ९ ॥

अथ तद्वृद्धौ प्रशंसापूर्वं श्राद्धदिनकृत्यगाथाभ्यामधिकारिणं निगमयति ।

नो माया नो पिया भज्जा, सरीरं नेव बांधवा ॥ पिच्छए तत्थ ठाणंमि, जत्थ अत्थं तु-पिच्छए ॥ १० ॥

अगिद्धो जो उ दव्वंमि, जिणत्थं नेइ वित्थरं ॥ एएणं सो महासत्तो, वुच्चए जिणसासणे ॥ ११ ॥

(टीका) नो माया० अगि०-जीवः सर्वोऽपि सर्वदानादिदुर्जयलोभग्रहग्रस्तत्वात् प्रायो यत्र स्थाने रक्षणीयत्ववर्द्धनीयत्वादिनार्थमेव यथा परम प्रेयतया प्रेक्षते तत्र स्थाने तथा न मात्रादीन् प्रेक्षते । यतः—तदर्थं जीवितमप्यनपेक्षमाणोसौ दुरितायशसंघातान् संधत्ते ॥ १० ॥ एवं सति यः संतोषगुणसारसंभागसिक्तस्वांतवृत्तित्वात् स्वस्मिन्नपि द्रव्ये सर्वथाऽगृद्धः सन् जिनादिद्रव्यं सम्यग् रक्षणादिना विस्तारं नयति, स एतेन कारणेन महासत्त्व उच्यते । उपलक्षणात् अन्येन वर्द्धापयति अनुमोदयत्यपीत्यर्थः । तथं च नरमावर्तादिसामग्रीवशात् माध्यस्थ्यादिमूलगुणाः प्रादुर्भवन्ति । ततः सद्भक्तिसत्त्वोल्लासः प्रवर्त्तते । ततः सम्यक्चिंतोद्गच्छति । ततः पूर्वोक्ता वृद्धिरुदेतीति परमार्थः ॥ ११ ॥

एवं देवद्रव्यादिवृद्धिं कुर्वता श्राद्धेन तत्फलरूपो देवद्रव्यादेरुचितो भोगस्त्याज्य इति दर्शयन्नाह—

दुविहं च देवदव्वं, भोगुवभोगेहिं तत्थ दुविहं पि । उचिएण वड्ढअव्वं, अन्नहा भत्तिभंगो य ॥ १२ ॥

(टीका) दुविहेति द्विविधं च देवद्रव्यं भवतीति शेषः । चकारात् गुरुद्रव्यादिकमपि ग्राह्यं कुतः भोगोपभोगाभ्यां । सकृद्भो-

गाढं न वस्तु भोगः नैवेद्यस्रगादिकं। पुनः पुनर्भोगार्हं वस्तु उपभोगो भूषणगृहादिकं। तत्र द्विविधेऽपि द्रव्ये उचितेन वर्त्तितव्यं विधिव्यापारेण वर्त्तितव्यं। भोगोपभोगद्रव्यं स्वस्वोचितस्थानचैत्यादौ यथार्हदाशं प्रयोक्तव्यं। प्रमोदातिशयादिसंभवाद-न्यथानुचितस्थाने व्यापारणेन भक्तिभंग आपद्येतेत्यर्थः। अत्रेदं तत्त्वं। देवादिभोगद्रव्ये स्वकार्ये व्यापारिते सति न्यूनीभव-नेन स्फुटं खंडितद्रव्यरूपाशातना प्रतीयते। तथा सति तदुचितोपभोगव्याघातेन तज्जन्यविभूषाभक्त्युल्लासादिभंगोऽपि संभा-व्यते। उपभोगद्रव्ये तूक्तदोषाभावेऽपि आशातिक्रमनिःशूकताऽविनयादिदोषसंभवेनोभयभक्तिभंगः स्फुटं समुज्जृंभतेऽत उभयमपि श्राद्धेन यथासंभवं स्वकार्यादौ न व्यापार्यं, उचितपदे च व्यापार्यमेव। तथाहि स्वगृहचैत्यढौकितचोक्षपुगीफलनैवेद्यादिविक्र-योत्थं पुष्पभोगादि स्वगृहचैत्ये न व्यापार्यं, नापि चैत्ये स्वयमारोप्यं। किंतु सम्यक् स्वरूपमुक्त्वाऽर्चकादेः पार्श्वात् तद्योगाभावे सर्वेषां स्फुटं स्वरूपमुक्त्वा स्वयमारोपयेत्। अन्यथा मुधा जनप्रशंसादिदोषः। गृहचैत्यनैवेद्यादि चारामिकस्य प्रागुक्त-मासदेयस्थाने नार्प्यं। स्वधनार्पणसामर्थ्याभावे च आदावेव नैवेद्यार्पणेन मासदेयोक्तौ तु न दोषः। मुख्यधुरया मासदेयं पृथगेव कार्यं, गृहचैत्यनैवेद्यचोक्षादिकं तु देवगृहे मोच्यं, अन्यथा गृहचैत्यद्रव्येणैव गृहचैत्यं पूजितं स्यान्नतु स्वद्रव्येण, तथा चानादरावज्ञादिदोषः। न चैवं युक्तं। स्वदेहगृहकुटुंबाद्यर्थं भूयसोऽपि व्ययस्य गृहस्थेन करणात् देवगृहे देवपूजापि स्वद्रव्येणैव यथाशक्ति कार्या। न तु स्वगृहढौकितनैवेद्यादिविक्रयोत्थद्रव्येण, देवसत्कपुष्पादिना वा, प्रागुक्तदोषात्। तथा देवगृहागतं नैवेद्याक्षतादि स्ववस्तुवत् मुषकादेः सम्यग् रक्षणीयं, सम्यग् मूल्यादियुक्त्या च विक्रेयं। नतु यथा तथा मोच्यं देवद्रव्यविनाशादि दोषापत्तेः। तत्रापि स्वतः चैत्यद्रव्योत्पत्त्यसंभवे तत्पूजायां व्यापार्यं नान्यथा। तथा सति तद्व्यापृतौ अनादरावज्ञादिदोषापत्तेः। तथा भोगविनष्टं द्रव्यं

निम्मल्लं चिंति गीयत्थेति बृहद्भाष्यवचनात्। यज्जिनबिंबारोपितं सत् विच्छायीभूत विगंधं जातं दृश्यमानं च निःश्रीकं न भव्यजनमनः प्रमोदहेतुस्तन्निर्माल्यं ब्रुवन्ति बहुश्रुता इति. संघाचारवृत्त्युक्तेश्च भोगविनष्टमेव निर्माल्यं । न तु विचारसारप्रकरणोक्तप्रकारेण दौकिताक्षतादेर्निर्माल्यत्वमुचितं । शास्त्रांतरे तथा लोके अदृश्यमानत्वादक्षोदक्षमत्वाच । केचित्त्वत्रान्येषां भोगानर्हत्वादेव गर्भे देवादिनिश्रितं द्रव्यं निर्माल्यमाहुरिति । तत्त्वं पुनः केवलिगम्यं । तच्च वर्षादौ विशेषतः कुंथ्वादिसंसक्तेः पृथक् पृथक् जनानाक्रम्य शुचिस्थाने त्यज्यते एवमाशातनापि न स्यात् । स्नात्रजलमपि तथैवातः शेषावत् शांतिपानीयं मस्तक एव दातव्यं । यदुक्तं हेमवीरचरित्रे "अभिषेकजलं तत्तु सुरासुरनरोरगाः । ववंदिरे मुहुः सर्वांगीणं चोपरि चिक्षिपुः १ " पद्मचरित्रेऽपि २९ उद्देशे । आषाढचातुर्मासिकाष्टाह्निकाचैत्यस्नात्राधिकारे " तं ह्वणसंतिसलिलं नरवइणा पेसिअं सभज्जाणं । तरुणचलयाहिं नेउं, वुढं चिय चिय उत्तमंगेसु १" बृहच्छांतावपि शांतिपानीयं मस्तके दातव्यमिति । पुष्टालंबने तु जरासंघमुक्तजरोपद्रुतं स्वसैन्यं धरणेंद्रदत्तपार्श्वबिंबस्नात्रांबुपरिक्षेपेण श्रीकृष्णेन पटूचक्रे । एवं श्रीपालमहीपालादिनामपि[1] बोध्यमिति ॥ तथा यथासंभवं देवादिसंबंधिगृहहट्टक्षेत्रवाटिकापाषाणेष्टिकाकाष्ठवंशकवेल्लुकमृत्तिकादिकं श्रीखंडकेसरभोगपुष्पादिकपिंगानिकाचंगेरीधूपपात्रकलशवासकूंपिकाश्रीकरीचमरचंद्रोदयझल्लरीभेर्यादितारमाचाणसरावजवनिकाकंबलकपाटपट्टपट्टिकाकुंभउरसिककज्जलजलप्रदीपादिकं चैत्यशालाप्रणाल्याद्यागतजलाद्यपि न स्वपरकार्ये किमपि न व्यापार्यं । देवभोगद्रव्यवत् तदुपभोगस्यापि दुष्टत्वात् । चमरसावाणादीनां मलिनीभवनत्रूटनपाटनादिसंभवे नाशिकदोषोपपत्तो देवसत्कं वादित्रमपि गुरोः संघस्यापि चाग्रे न वाद्यं । केचित्त्वाहुः पुष्टालंबने बहुनिःक्रयार्पणपूर्वं

1 श्रीपालेन श्रीसिद्धचक्रस्नात्रजलेन महीपालस्य च सूर्यकुण्डस्नानात् कुष्ठो गतः ।

व्यापार्यतेऽपि । यतो " मुल्लं विणा जिणाणं, उवगरणं चमरछत्तकलसाइं । जो वावरेइ मूढो, निअकज्जे सो हवइ दुहिओ ॥ १ ॥ " स्वयं न व्यापारयता जातु भंगे उपकरणस्य स्वद्रव्येण नव्य समारचनमिति । अन्यथा तु तिर्यगादिदुर्गतिदुःख भाग् देवसेनमातृवत् भवति । संप्रदायेऽत्र दृष्टांतो यथा—विभाय दीपं देवानां, पुरस्तेन पुनर्नहि । गृहकार्याणि कार्याणि, तिर्यङ्क्च भवेद्यतः । इंद्रपुरे देवसेनो व्यवहारी समातृको वसति स्म । तत्रैव पार्श्ववर्त्ती धनसेन औष्ट्रिको ऽभूत् । तस्य गृहान्नित्यमेका उष्ट्रिका देवसेनगृहे समेति । कुट्टयित्वा धनसेनेन गृहे नीतापि पुनर्देवसेनगृहे एव यात्वा तिष्ठति । तत इष्टेन मूल्येन गृहीत्वा स्थापिता उभयोरपि स्नेहवत्त्वात् । एकदा तेन पृष्टो ज्ञानी स्नेहकारणं प्राह । एषा पूर्वभवे तव माताऽभूत् तयैकदा जिनाग्रे पूजार्थं दीपं विधाय तेन दीपेन गृहकार्याणि कृतानि, धूपांगारेण चुल्ली संधुक्षिता तेन कर्मणा उष्ट्री जाता । अतः प्राग्भवोऽस्य स्नेहस्तवोचितः । ततः उचितं प्रायश्चित्तं कृत्वा सा सद्गतिं ययाविति । तथा ज्ञानद्रव्यमपि देवद्रव्यवन्न कल्पत एवातो ज्ञानसत्कं कागदपत्रादि साध्वाद्यर्पितं श्राद्धेन स्वकार्ये न व्यापार्यं पुस्तिकायामपि न स्थाप्यं समधिकनिष्क्रियं विनेति २ । श्राद्धानां साधारणमपि संघदत्तमेव कल्पते व्यापारयितुं न तु अन्यथा संघेनापि सप्तक्षेत्रीकार्ये एव व्यापार्यं न मार्गणादिभ्यो देयं । सांप्रतिकव्यवहारेण तु यद्गुरुन्युञ्छनादि साधारणं कृतं स्यात् तस्य श्रावकश्राविकाणामर्पणे युक्तिरेव न दृश्यते, शालादिकार्ये तु तत् व्यापार्यते श्राद्धैरिति ३ । साध्वादिसत्कमुखवस्त्रिकादेरपि व्यापारणं न युज्यते गुरुद्रव्यत्वात् । स्थापनाचार्यजपमालादिकं च ध्यानादिधर्मवृद्धये प्रायः श्राद्धार्पणार्थं गुरुभिर्व्यवह्रियते अनिश्रितज्ञानोपकरणत्वात् । गुर्वर्पित तद्ग्रहणेऽपि व्यवहारो दृश्यते । तथा स्वर्णादिकं तु गुरुद्रव्यं जीर्णोद्धारे नव्यचैत्यकरणादौ च व्यापार्यं । तद्यथा । गुरुपूजासत्कं सुवर्णादिद्रव्यं

अत्र विशेषः षट्त्रिंशज्जल्पतो बोध्य इति दिक् । किंचात्र पार्श्वस्थादीनामपि गीतार्थानामेव पुर आलोच्यं न तु संविग्न-स्याप्यगीनार्थस्य पुरः । यतः "अग्गीओ न वि जाणइ, सोहिं चरणस्स देइ ऊणहिअं। तो अप्पाणं आलोअगं च पाडेइ संसारे ॥ १ ॥" अत एव गीतार्थस्य दुर्लभत्वे कालतो द्वादशवर्षाणि क्षेत्रतः सप्तयोजनशतानि तद्गवेषणागमे श्रूयते, एवमालोचनापरिणतोऽपि समाराधको भवति निःशल्यत्वात् । यतः " आलोअणा परिणउ सम्मं संपठ्ठिओ गुरुसगासे । जइ अंतरावि काल, करिज्ज आराहओ तहवि ॥ १ ॥ " अतः प्रतिक्रमणेऽपि पूर्वं विशुद्धिमूलं भावालोचनैव प्रवर्त्तते इत्यपि सिद्धम् ॥ ५० ॥

अथालोचनक्रमद्वारं प्रकाशयति—

दुविहेणणुलोमेणं, आसेवणवियडणाभिहाणेणं, आसेवणाणुलामं, जं जह आसेविअं विअडे ॥ ५१ ॥

आलोअणाणुलोमं, गुरुगवराहे उ पच्छओ नियडे । पणगाइणाकमेणं, जह जह पच्छित्तवुड्ढीओ ॥५२॥

(टीका) दुविहेति । आलोयणा इति । द्विप्रकारेणानुलोम्येन क्रमेणालोचनां ददातीत्यर्थः । तत्र तदासेवनानुलोम्यं स्यात् यत् येन क्रमेणासेवितं विकटयेत् प्रकाशयेत् आलोचकः । पुनस्तत् आलोचनानुलोम्यं यत्पश्चात् लघ्वपराधानंतरं गुरुकापराधान् विकटयेत् आलोचयेत् कथमित्याह 'पणगा' इति। पंचकदशप्रभृतिना क्रमेण प्रायश्चित्तवृद्धिर्यथा स्यात्तथा विकटयेत्। प्रकृतमिह च लघावतीचारे पंचकं नाम प्रायश्चित्तं । गुरुके तु दशकं । गुरुतरं तु पंचदशमित्येवमादीनि । अत्र गीतार्थ आलोचनानुलोम्येनैवालोचयति कारणं तु गीतार्थगम्यं । इतरस्तु आसेवनानुलोम्येनालोचनानुलोम्यानभिज्ञत्वात् । तस्य चैवमेवातिचाराणां सुस्मरत्वमिति ॥ ५१-५२ ॥

सम्यग्द्वारं विवृणोति—

तह आउट्टिअदप्पमाय, कप्पा तहा य जयणाए । कज्जे संभमहेउं, जहट्ठिअं सव्वमालोए ॥ ५३ ॥

(टीका) तह आउट्टिएति । तथाशब्दो यथाक्रमे । आकुट्टिकोपेत्यकरणं, दर्पो वल्गनादिः, प्रमादो मद्यादिः स्मृतिभ्रंशादिर्वा, एभ्यस्तथाकल्पतो वाऽशिवादिपुष्टालंबनतो वा । कल्पश्च यतनादिविषय इत्यत आह यतनया यथाशक्ति संभमरक्षारूपधिया, कार्ये संघादिप्रयोजने, तथा संभ्रमहेतौ प्रदीपनकादौ अयतनया अनपेक्षितसंयमरक्षया च यदासेवितं तदिति गम्यं। यथास्थितं सर्वमालोचयेत् गुरुभ्यो निवेदयेद्विशुद्धिकामो नतु लज्जादिना किंचिद् गोपयति, निःशल्यत्वेनाराधकत्वात्। यतः 'लज्जाइगारवेणं, बहुस्सुअमएण वा वि दुच्चरियं । जो न कहेइ गुरुणं, नहु सो आराहगो भणिओ ॥ १ ॥ गारवेणत्ति रसादिगारवप्रतिबद्धत्वेन तपोऽचिकीर्षुतयेत्यर्थः ॥ ५३ ॥ अथ द्रव्यादिशुद्धिफलमाह—

दव्वाईसु सुहेसु, देया आलोअणा जओ तेसु । हुंति सुहभावबुद्धी, पाएसुसहाओ सुहहेउं ॥ ५४ ॥

अथ द्रव्वादिशुद्धिविवृण्वन्नाह—

दव्वे खीरदुमाई, जिणभुवणाई अ हुंति खित्तंमि। पुण्णतिही पभिइ काले, सुहोवउगाइ भावेसु ॥ ५५ ॥

(टीका) दव्वेति । सुगमा । नवरं क्षीरद्रुमो न्यग्रोधादिः । आदिशब्दात् चंपकाशोकसहकारादिग्रहः, जिनभुवनादि (दिः) आदिशब्दादन्यदपि शुभक्षेत्रं । आह " उच्छुवणे सालिवणे, चेइहरे चेव होइ खित्तंमि । गंभीरसाणुणाए, पयाहिणावत्तए उदगे ॥ १ ॥ " पूर्णाप्रभृति तिथिकाले रिक्तापष्ठीतिथौ नियमान्नालोचनेति । शुभोपयोगादौ (दिरि) त्यत्रादिशब्दान्निमित्तशास्त्रगतशुभभावपरिग्रहः । एवंतद्विधिना गुरुसाक्षिकमेव शुद्धिः कार्येति परमार्थः ॥ ५५ ॥ विपक्षे दोषमाह—

**आलोअणं च दाउं, सईवि अण्णे तहप्पणो दाउं। जे वि हु करंति सोहिं, तेवि ससल्ला विणिद्दिट्ठा ॥५६॥**

(टीका) सत्यपि आलोचनाचार्ये स्वबुद्ध्या शुद्धौ कृतायामपि सशल्यता स्वस्मिन्नेव वर्त्तते इत्यर्थः । एतेन परसद्भावे परस्यैव पुरः तां यच्छन् शुद्ध्यतीति सिद्धं । यदाह । "छत्तीसगुणसम्पन्ना, गएण तेणं अवस्स कायव्वा । परसक्खिया विसोही सुट्ठु ववहारकुसलेण ॥ १ ॥" पराभावे तु आत्मनोऽपि आलोचनां यच्छन् शुद्ध्यति केवलं सिद्धान् साक्षीकृत्येति । न चात्र भावालोचनयैव विशुद्धिसंभवे गुर्वादि साक्षिका सा व्यर्थेति वाच्यं तत्साक्षिकत्वे धर्मप्रतिपत्तौ विशेषगुणोत्कर्षलाभात् । यदाहुः । श्रावकप्रज्ञप्तौ हरिभद्रसूरिपादाः । "संतंमिवि परिणामि, गुरुमूलपवज्जणंमि एसगुणो । दढया आणाकरणं कम्मखओवसम वुद्धीअ ॥ १ ॥" गुरुसाक्षिकत्वे ह्यालोचनादिपरिणामस्य दृढता भवति । शंकापनोदेन विशिष्टनिर्णयोल्लासात् । "गुरुसक्खिओ धम्मो" इति वचनात् जिनाज्ञाराधनं उत्साहानुकूलगुरूपदेशोद्भूतशुभाशयादधिकः क्षयोपशमः तस्माच्चाधिकाज्ञाप्रतिपत्तिरित्यादिगुणः(णाः)।एवं चान्येऽपि नियमाः प्रायो गुरुसाक्षिकाः स्वीकार्याः । यतः शत्रुञ्जयमाहात्म्ये द्वितीयसर्गे। "क्रियाः सर्वाः प्रवर्त्तन्ते, गुरौ साक्षिणि नान्यथा । चक्षुष्मानपि नो पश्येद्वस्तु चेद्भास्करो नहि ॥ १९ ॥" अत एव प्रतिक्रमणाद्यंतेऽपि कृतकार्यनिवेदनरूपालोचना च समुचितैव बोध्या ॥ ५६ ॥ अथालोचनागुणानाह—

**लहु आल्हादिजणण, अप्पपरनिवित्ति तह अज्जवं सोही। दुक्करकरणं आणा, निस्सल्लत्तं च सोहिगुणा ॥५७॥**

(टीका) लहुआ इति । यथा भारवाहिनो भारेऽपहृते लघुता तथा शल्योद्धारे आलोचकस्यापि १ । आल्हादिजननं प्रमोदोत्पादः २ । आत्मपरयोर्दोषेभ्यो निवृत्तिरालोचने हि स्वस्य दोष निवृत्तिः प्रतीता तत् दृष्ट्वान्येऽप्यालोचनाभिमुखाः स्युरित्यन्येषामपि दोषेभ्यो

निवृत्तिः स्यात् ३ । आर्जवं निर्मायिता सम्यगालोचनात् ४ । शोधिः शुद्धताऽतीचारमलापगमात् ५ । दुःकरकरणं दुःकरकारिता, ततो यत्प्रतिसेवनं तन्न दुःकरमनादिभवाभ्यस्तत्वात्, यत्पुनरालोचयति तत् दुःकरं प्रबलमोक्षानुयायिवीर्योल्लासविशेषेणैतस्य कर्त्तुं शक्यत्वात्, अत एवाभ्यंतरतपोरूपं सम्यगालोचनं मासक्षपणादिभ्यो दुःकरं ६ । तथा आज्ञा तीर्थकृतामाराधिता स्यात् ७ । निःशल्यत्वं स्पष्टं । उक्तं चैकोनत्रिंशदुत्तराध्ययने । आलोअणयाणं मायानियाणमिछादंसणसल्लाणं मुक्खमग्गविग्घाणं अणंतसंसारवद्धणाणं उद्धरणं करेइ । उज्जुभावंचणं जणइ । उज्जूभावपडिवन्नेणं जीवेऽमाई इत्थीवेअं नपुंसगवेअं च न बंधइ । पुव्वबद्धंचणं निज्जरइत्ति ८ ॥५७॥

एवं शुद्धौ सत्यामालोचकस्य शल्यघातचिकित्सामिव विशेषशुद्धिमूलमुत्तरीकरणात्मकं प्रायश्चित्तविधिं दर्शयति । प्रथमं गुरुद्रव्यपरिभोगप्रायश्चित्तमाह—

मुहपत्तिआसणाईसु, भिन्न जलन्नाइसु गुरुलहुगाइ । जइदव्वभोगि इय पुण॰ वत्थाइसु देवदव्वं व ॥५८॥

(टीका) मुहपत्तीति । गुरुसत्के मुखपोतिकासनादौ भुक्ते भिन्नं निर्विकृतिकं । गुरुसत्के जले भुक्ते १ । अन्ने भुक्ते ४, वस्त्रादौ (अन्ने भुक्ते २ वस्त्रादौ च ४) । विक्रमार्कादिना पूजाधियैव निश्राकृतकनकादौ गुरुद्रव्ये भुक्ते ६, तथा वस्त्रादौ इयान् विशेषः यत्र गुरुद्रव्यं भुक्तं तत्रान्यत्र वा साधुकार्ये वैद्यार्थं बंदिग्रहाद्यापदुद्धारार्थं वा तावन्मितवस्त्रादिप्रदानपूर्वं प्रायश्चित्तं देयमिति भावः ॥५८॥

अथ साधारणादिविषयं प्रायश्चित्तमाह—

साहारण जिणदव्वं जं भुत्तं असणवत्थकणगाई । तत्थाऽन्नत्थ व दिन्ने चउलहुचउगुरु अ छल्लहुगा ॥५९॥

(टीका) साहरणेति । साधारणद्रव्यं जिनद्रव्यं च यावन्मात्रं व्यापारितं स्वकार्ये स्यात् । किंतदित्याह । अशनं नैवेद्यं, वस्त्रं परिधापनिकादिः, कनकादिः कनकरूप्यमौक्तिकादिः तस्मिन् तावन्मात्रे जिनद्रव्ये साधारणद्रव्ये च तस्मिन्नन्यस्मिन् वा चैत्यादौ दत्ते सति जघन्यादिक्रमेण चतुर्लघु चतुर्गुरु षड्लघु प्रायश्चित्त भवति । इति श्राद्धजीतकल्पानुसारेण प्रमादहेतुकं प्रायश्चित्तं दर्शितं । एवमाकुट्या चोक्तं द्विगुणं, दर्पेण त्रिगुणं बोध्यं । तथा द्रव्यमपि जघन्यतस्तावन्मात्रमुचितपदे व्ययितव्यं । उत्कर्षतस्तु तद्‌द्वर्गितादिकं चेति । किंच जातु व्यापारादिना देवादिद्रव्यं स्वधनेन संपृक्त जातं तदा तद्विवेकप्रायश्चित्तेन शोधयित्वा सिद्धपुरीयश्राद्धवत् चैत्यादौ समाधिकं मोच्यं । भ (भु) क्त तु तत् स्वधनेनोपार्ज्य पूर्वविधिना तत्र व्ययितव्यं तपः कार्यं च येन तद्भुक्तं निर्धनत्वात् दातुं न शक्यते तेनापि स्वधनानुसारेण इत्वरकालावधिक्रमेण च चैत्यादिकं सत्कुर्वता यथावत् गीतार्थदत्तं तपः कार्यं । यतः गुरुदेवार्थचौरोऽत्र, व्यर्थयत्यर्चयन् जिन । वृजिनं स्वस्य सद्ध्यान–पात्रदानपरायणः॥१॥ " निकाचितमपि दुःकर्मसद्ध्यानसामर्थ्यात् शिथिलीभवतीति स्थितिः । तथाज्ञाभंगातिक्रमव्यतिक्रमादौ प्रायश्चित्तविशेषविस्तरो व्यवहारभाष्यादिभ्योवसेयः । साधुनापि तद्भोजिगृहिदत्तदेवभुक्तद्वाराभूतदोषसंभवेन तथैव जीतानुसारेण प्रायश्चित्तविधौ यतनीयं। अन्यथा पूर्वोक्तविधिना कुलपरंपरं दोषमालिन्यं प्रवर्त्तते । यदुक्तं शत्रुञ्जयमाहात्म्ये " देवद्रव्यं गुरुद्रव्यं, दहेदासप्तमं कुलं । अंगालमिव तत्स्पृष्ट, युज्यते नहि धीमतां ॥ १ ॥ " देवादिद्रव्यमविधिना व्यापारितं सत् आसप्तमं कुलं अभिव्याप्य दहेत् । निर्धनत्वादिना निःसारं करोति । " सत्तट्ठगुरुपरम्परा कुशीलेति । सत्तट्ठपयाइं अणुगच्छइति । इत्यादिवत् । उपलक्षणतो यावत् तत्प्रतीकारौदासीन्यं तावत् दोषशुद्धिर्न निःशूकत्वादित्यर्थः । अतोऽगालवत् कुटुंबादिधियापि तयोः संसर्गो विवेकिना परिहार्य एवेत्यर्थः । एतेन येन देवद्रव्यादि विनाशितं तस्यैव दोषसंभवो नान्यस्येत्यपि वदंतो निरस्ता । इति प्रायश्चित्तद्वारं समाप्तम् ॥ ६९ ॥

अथोक्तविधिनार्जितं दुःकर्म प्रायश्चित्तविधिना भवांतरेऽपि क्षीयते इति तत्सामर्थ्यदर्शनेन भव्यानामुत्साहवृद्ध्यर्थं संकाशादिदृष्टांतानाह–तत्रेदं देवद्रव्यविनाशोद्भूतदुःकर्मक्षयार्थं सिद्धपुरीयश्राद्धनिदर्शनमुक्तपूर्वं बोध्यं। भवांतरे च तत्कर्मक्षयार्थं संकाशदृष्टान्तो यथा–

पमायमित्तदोसेण, जिणरिच्छा जहा दुहं। पत्तं संगाससड्ढेण, तहा अन्नोवि पाविही ॥ ६० ॥

संकास गंधिलावइ, सक्कावयारंमि चेइए कहवि। चेइयदव्वुवयोगी, पमायओ मरण संसारे ॥ ६१ ॥

(टीका) पमायेति। संकासेति–संकाशो नाम श्रावकः स्वभावादेव भववैराग्यवान्। यथोदितश्राद्धाचारनिरवद्यव्यवहारो गंधिलावत्यां पुरि वसन् शक्रावतारे चैत्ये प्रशस्तचेताश्चिंतां चकार। अन्यदा कथमपि गृहव्यापारव्याक्षेपादिना चैत्यद्रव्योपजीवको जातः। ततोऽसौ यावज्जीवमनालोचिताप्रतिक्रांतकर्मा मरणं प्राप्य संसारे पूर्वोक्तदुःखपरंपराभाग् संख्येयान् दुर्भवान् भ्रांतः ॥ ६०–६१ ॥

ततः—

तगराए इब्भसुओ, जाओ तं कम्म सेसयाउअ। दारिद्दमसंपत्ती, पुणो पुणो चित्तनिव्वेओ ॥ ६२ ॥

केवलिजोगे पुच्छा, कहणे बोही तहेव संवेओ। किं इत्थमुचिअमिण्हिं, चेइयदव्वस्स वुड्ढित्ति ॥ ६३ ॥

(टीका) तगराएति। केवलियोगेति—पूर्वं तद्धनविनाशे तत्कालोपार्जितलाभांतरायाद्युदयात् तवात्रापि धनादिरोधः, सांप्रतं तद्वृद्धौ तवापि तथैव। यादृशं चोप्यते बीजं तादृशं लभते फलमित्यर्थः ॥ ६२–६३ ॥

अथ तद्विधिमाह—

गासच्छायणमित्तं, मुत्तं जं किंचि मज्झ तं सव्वं । चेइयदव्वं नेयं, अभिग्गहो जावजीवाए ॥ ६४ ॥

(टीका) गासछायणेति । स्वगृहनिर्वाहातिरिक्तत्वे सति उचितव्यापारोपार्जितं शेषधनं देवसत्कमेवेति, यावज्जीवाभिग्रहात्मकं प्रायश्चित्तं प्रतिपन्नं ॥ ६४ ॥ अथ तत्फलमाह—

सुहभावपवित्तीए, संपत्ती भिग्गहंमि निच्चलया । चेइहरकारावण, तत्थ सया भोग परिसुद्धी ॥ ६५ ॥

(टीका) सुहभावेति । तस्यैव महात्मनो गृहीतमहाभिग्रहस्य शुभभावप्रवृत्तितोऽतीवचैत्यद्रव्यविवृत्सानशादुल्लसद्विशिष्टाशयोदयाच्च लाभांतरायक्षयोपशमस्तस्माच्च संप्रति प्रभूततरविभूतिसंप्राप्तिस्तस्यां सत्यामपि अभिग्रहे निश्चलता–निजमनोदृढता, अतस्तस्य नाधिकृतद्रव्यविषये स्वमांतरेऽप्यादातुकामितेत्यर्थः । ततः क्रमेण तस्यामेव नगर्यां तेन चैत्यं विहितं । तत्र सदा भोगपरिशुद्धिः । चैत्यविधापने सदाभोगः शास्त्रपरतन्त्रो विमर्शस्तत्पूर्वं भूम्यादेः समंतात् शोधनं । यद्वा तत्र चैत्यविधापने निपदनादौ क्रियमाणोऽपि सदा नित्यं भोगः आशातनापरिहार इत्यर्थः । अत्र चैत्यविधापनविधिः आशातना च पंचाशकषोडशकादिभ्यो बोध्या ॥ ६५ ॥

अथोपसंहारमाह—

इय सो महाणुभावो, सव्वत्थवि अविहिभावचाएणं। चरिउं विसुद्धधम्मं, अक्खलिआराहओ जाओ ॥६६॥

(टीका) इयसोमेति–इत्येवं उक्तनीत्या स संकाशजीवो महानुभावः । वर्द्धमानसदध्यवसायविशेषात् समुद्घाटितपुण्यप्रभावः, उद्वर्त्तनादिना पुण्यप्रकृतेरुपचयः, अपवर्त्तनादिना पापप्रकृतेरपचयश्चेति भावः । सर्वधर्मकृत्येषुऽविधिभावत्यागेनानुचितप्रवृत्तिरोधेन

विसुद्धधम्मं श्रुतचारित्रलक्षणमाराध्य अस्खलिताराधकः–निर्वाणसाधको जातस्तद्धितानुष्ठानकारीत्यर्थः ॥ ६६ ॥

**संकासोवि विभित्तूणं, कम्मगंठिं सुनिव्वुडो । जाहिही सो उ निव्वाणं, महासत्तो न संसओ ॥ ६७ ॥**

(टीका) संकासोवीति। ततः संकाशोऽपि कालक्रमेण समूलमोहमुच्छिद्य महासत्त्वः संतोषसुधासिक्तमनोवृत्तिः, सुनिर्वृत्तः संयमरतत्वेन मुक्तिसुखास्वादकत्वात् जीवन्मुक्त इत्यर्थः। यदाहुः "निर्जितमदमदनानां वाक्कायमनोविकाररहितानां। विनिवृत्तपराशानामिहैवमोक्षः सुविहितानामिति ॥ १ ॥ निर्वाणं गमिष्यति। एवं ज्ञानसाधारण (द्रव्य) विनाशेऽप्युक्तविधिना दुःकर्मक्षयदर्शनार्थं कर्मसारपुण्यसारयोर्निदर्शनं यथा—

"भोगपुरे चतुर्विंशतिकनककोटीस्वामी धनावहश्रेष्ठी, पत्नी धनवती, तयोर्यमलजातौ कर्मसारपुण्यसारौ सुतौ। अष्टमे वर्षे विज्ञोपाध्यायस्य पार्श्वे पठनाय तस्थतुः। पुण्यसारः सुखेन सर्वविद्या अधीतवान् कर्मसारस्य तु बहूपक्रमेणाप्यक्षरमात्रं नायाति, वाचनलिखनादौ तु किं वाच्यं। ततः पशुप्रायत्वात् तस्य पाठकेनापि पाठनं मुक्तं, क्रमेण द्वावपि यौवनस्थौ पितृभ्यां समृद्धतया सुलभे महेभ्यकन्ये सोत्सवं परिणायितौ। मा मिथः कलहयेतामिति द्वावपि च द्वादश द्वादश कनककोटीर्दत्वा पृथक् कृतौ, पितरौ तौ प्रव्रज्य स्वर्गतौ अथ कर्मसारः स्वजनादिभिर्वार्यमाणोऽपि कुबुद्ध्या तथा वाणिज्यं कुरुते यथा अर्थहानिरेव स्यात्। एवं स्वल्पैरेव दिनैर्जनकार्पितद्वादशकोटयो गमिताः पुण्यसारस्य तु द्वादशकोटयः खात्रं दत्वा तस्करैर्गृहीताः। तेनोभावपि दरिद्रौ जातौ। त्यक्तौ च स्वजनादिभिः भार्ये अपि पितृगृहं गते। ततो निर्बुद्धी निर्भाग्याविति लोकैर्दत्तापमानौ लज्जमानौ गत्वा देशांतरं स्थितौ च पृथक् पृथक् महेभ्यगृहे। तत्राप्यन्योपायाभावाद् भृत्यवृत्त्या यस्य गृहे कर्मसारः स्थितः सोऽपि कृपणत्वात्

तस्मै श्रोक्तं वेतनमपि न दत्ते । मुहुर्मुहुस्तं वंचयते । इतो बहुभिर्दिनैराद्येन किमपि नार्जितं द्वितीयेन कियदर्जितं परं तत्प्रयत्नगोपितमपि धूर्त्तेनापहृतं । एवमन्यान्यस्थानेषु भृत्यवृत्त्या धातुर्वादखनिवादसिद्धरसायनरोहणाद्रिगमनमंत्रसाधनरुदत्याद्योषधिग्रहणादिना चैकादशवारान् महोपक्रमकरणेऽपि कुबुद्ध्या न्यायवैपरीत्यविधानादाद्येन कापि धनं नार्जितं। किंतु तत्र दुःखान्येव सोढानि । अपरेण पुनरार्जितमपि प्रमादादिनैकादशवारान् गमितं। ततोऽत्युद्विग्नौ तौ पोतमारुह्य रत्नद्वीपं गत्वा सप्रत्ययरतद्वीपदेव्यग्रे मृत्युमप्यंगीकृत्य निविष्टौ । ततोऽष्टमे उपवासे नास्ति युवयोर्भाग्यमित्युक्त्वा देव्या तिरोदधे । ततः कर्मसार उत्थितः पुण्यसारस्य त्वेकविंशत्योपवासैः तया चिंतारत्नं दत्तं । कर्मसारः पश्चात्तापं कुर्वन् पुण्यसारेणोक्तो हे बंधो मा विषीद एतच्चिंतारत्नेन तवापि चिंतितं सेत्स्यति । ततो द्वावपि प्रीतौ क्रमात्पोतमारुढौ । रात्रौ च राकाशशांकोदये वृद्धेनोक्तं भ्रातः स्फुटीकुरु चिंतारत्नं विलोक्यते, तस्य चंद्रस्य चाधिकं तेज इति । ततो लघुनापि पोततटस्थेन दुर्दैवप्रेरितेन रत्न हस्ते नीत्वा क्षणं रत्ने क्षणं चंद्रे च दृष्टिं निदधता मनोरथेन सह मध्येसिंधु तत्पातितं । ततो द्वावपि समदुःखौ स्वपुरं प्राप्य ज्ञानिगुरुं स्वप्राग्भवमप्राष्टां । ज्ञानी प्राह—"चंद्रपुरे जिनदत्तजिनदासश्रेष्ठिनौ परमार्हतावभूतां । अन्यदा तत्रत्यश्रावकैः संभूय ज्ञानद्रव्यं साधारणद्रव्य च तयोः उत्तमत्वादर्पितं रक्षार्थं । अन्येद्युराद्येन स्वपुस्तिकायामतिविलोक्यमानलेख्यकेन मासदेयतया द्रामान् निर्णीय पार्श्वे त्वपरद्रव्याभावादिदमपि ज्ञानस्थानमेवेति विचिंत्य च ज्ञानद्रव्याद् द्वादशद्रामा लेखकस्यार्पिताः । द्वितीयेन तु साधारणद्रव्यं सप्तक्षेत्रीयोग्यत्वेन श्राद्धानामपि योग्यमिति विमृश्य साधारणद्रव्याद् द्वादशद्रामाः स्वगृहगाढप्रयोजने अन्यद्रव्याभावाद्व्ययिताः । ततो मृत्वा दुःकर्मणा प्रथमनरकं गतौ । ततो देवद्रव्यभक्षकसागरश्रेष्ठिवत् सर्वत्र नरकएकेंद्रियद्वित्रिचतुःपंचेंद्रियतिर्यक्षु च द्वादशसहस्रवारान् भूयस्तरदुःखमनुभूय क्षीणदुःक-

मौणौ युवां जातौ । पूर्वकर्मणा अस्मिन् भवेऽपि द्वादशकोटिर्गमिता । एवं तद्वचः श्रुत्वा द्वाभ्या श्राद्धधर्मं प्रपद्य 'प्रायश्चित्तपदे सहस्रगुणा द्वादशद्रमाः व्यापारादौ यावदुत्पत्स्यंते तावत् ते ज्ञानसाधारणपदे एवार्पणीयाः । ततः परमुत्पन्नं धनं स्वनिश्रितं कार्यं' इति नियमो जगृहे । ततो द्वावपि प्राक्कर्मक्षयाद्धनवृद्धिं प्राप्य तन्मध्यादुभयपदे सहस्रगुणं देयं समर्प्य च क्रमाद् द्वादशकोटिभाजावभूतां। ततो महेभ्यौ तौ सुश्रावकतया सम्यग् ज्ञानसाधारणद्रव्यरक्षा तदुत्सर्पणादिना श्राद्धधर्ममाराध्य प्रव्रज्य च सिद्धौ इति ॥

अथ देवगुरुद्रव्यविनाशे महाकालदृष्टांतो यथा–अतीतोत्सर्पिण्यास्तुर्यारके श्री संप्रत्यर्हद्वारके श्रीपुरे नगरे शांतनो नृपती राज्यं चकार । तस्य राज्ञी सुशीला, तयान्यदा चत्वारः पुत्राः क्रमेण नीलमहानीलकालमहाकालनामानोऽजनिषत । ततः क्रमेण नीलजन्मनि गजसैन्यं रोगोपद्रवेण मृतं, महानीलजन्मनि हयसैन्यं मृतं, कालजन्मनि अग्न्याद्युपद्रवेण सर्वा ऋद्धिर्विनष्टा, महाकालजन्मनि कालातरे शत्रुभिः संभूय राज्यं गृहीतं । ततो राज्यभ्रष्टः सस्त्रीपुत्रः शांतनः क्रमेणाटन् सुराष्ट्रायां शत्रुञ्जयी नद्यासन्नपर्वते स्थितिं कृत्वा बहुकालं निरगमत् । तदानीं पुत्रा अप्याखेटकादिव्यसनोद्यता दुष्टकुष्टाद्यामयार्दिता जाताः । ततो नृपतिर्दुःखातुरो झंपापातेन मरणार्थं पर्वतमारुरोह । तत्र संप्रत्यर्हच्चैत्यं दृष्ट्वा गंतुकशंबलार्थं जिनानागमोक्तविधिनाऽपूपूजत् । अत्रावसरे तत्रागतेन तस्य पूजाविधिकौशल्यं दृष्ट्वा विस्मितेन धरणेंद्रेण बहिर्निर्गतः सन् पृष्टो नृपः स्वाभिप्रायं कथयतिस्म । ततो धरणेंद्रो त्रालमृत्युं निवार्य तत्पुत्रपूर्वभववृत्तांतं राज्ञेऽचीकथत् शृणु भो नरेन्द्र पूर्वभवे प्रथमपुत्रेण चौरजातीयेन तीर्थयात्रार्थं गच्छन् संघो लुंटितः साधुश्च हतः । द्वितीयपुत्रेण क्षत्रीयजातीयेन स्वस्त्रीहत्या कृता। तृतीयेन वणिक्पुत्रेण तत्त्वनिंदा कृता। चतुर्थेन च द्विजपुत्रेण देवद्रव्यं गुरुद्रव्यं च चोरितं । ततो दुर्गतौ बहून् भवान् भ्रांत्वा अकामनिर्जरया किंचित् क्षिप्तकर्माणः क्रमेण चत्वारोऽपि जीवास्त्वत्पुत्रा

जाताः । अवशिष्टकर्मोदयाच्चेदं पापफलं लब्धवंतस्तत्प्रसंगतस्त्वयापि प्राप्तं न । अतः सपुत्रस्त्वं एतत्तीर्थसेवां कुरु । एतज्जलेन स्नात्वा चैत्यानि प्रत्यहं पूजय, पिंडस्थादिध्यानपरायणो भव, सुसाधून् यथाशक्ति भक्त्या प्रतिलाभय, एवमादिप्रकारेण तत्त्वत्रयाराधनेन दुष्कर्म क्षयं कृत्वा षण्मासांते पुनः राज्यं प्राप्स्यसि । तदा साधर्मिकत्वात्साहाय्यं दास्यामीत्युक्त्वा स्वस्थानं धरणेंद्रो जगाम । नृपेणापि तथैव राज्यं लब्ध्वा क्रमेण संकाशवन्निर्वाणं लेभेऽत्र विस्तरः शत्रुंजयमाहात्म्यतो बोध्यः । अन्येऽपि दृष्टांता यथागमं भाव्या । इति श्रेयः ॥ ६७ ॥

अथ ग्रंथावसानेपि भव्यानुत्साहयति—

जइ इच्छह निव्वाणं, अहवा लोए सुवित्थडं कित्तिं । ता जिणवरनिद्दिट्ठे, विहिमग्गे आयरं कुणह ॥६८॥

अथ कविः स्वाभिनिवेशं निरासयन्नाह—

तहयिह भविबोहत्थं, भणिअं जं च विवरिअं इह गंथे । तं सोहंतु गीयत्था, अनभिनिवेसी अमच्छरिणो॥६९॥

अथ ग्रंथ समाप्तिं निगमयन्नंते मंगलं दर्शयति—

तवगणगयणदिवायर, विजयाईमाणसूरिरज्जंमि । भाणुविजयवुहसेवग—वायगलावण्णविजयेण ॥ ७० ॥

गंथंतरगाहाहिं, समत्थिया दव्वसित्तरी एसा । भविअजणबोहणत्थं, मंगलमालं कुणउ निच्चं ॥ ७१ ॥

॥ इति द्रव्यसित्तरी संपूर्णा ॥

देवगुरुद्रव्य विनाशे महाकाल दृष्टांतो. ॥ ५४ ॥

॥ अथ टीकाकार प्रशस्तिः ॥

वेदवेदर्षिचंद्रेऽब्दे, ईषस्य सितपक्षतौ । विवव्रे तत्रवृत्तिश्च, लावण्याऽह्वयवाचकैः ॥ १ ॥
यावन्महीमृगाक्षीयं, धत्ते वारिधिमेखलाम् । वाच्यमाना बुधैर्जीयात्, सवृत्तिर्द्रव्यसप्ततिः ॥ २ ॥
तर्कादिशास्त्रनिपुणैर्वैराग्यामृतसागरैः । शोधितेयं श्रिये श्रीमद्विद्याविजयकोविदैः ॥ ३ ॥

॥ इति ॥

॥ इति श्री द्रव्यसप्ततिकावृत्तिः समाप्ता ॥

॥ ॐ ॥

## ॥ देवद्रव्याधिकारेऽन्यज्ञातानि तत्र–देवाक्षत–भक्षक–शुभङ्करश्रेष्ठिज्ञातम् ॥



॥ अक्षतादेस्तु देवस्य, भक्षको दुःखमाप्नुयात्। तत्ततो यत्नतो रक्ष्यं, देवद्रव्यं विवेकिभिः ॥ १ ॥

स्पष्टार्थोऽयम् श्लोकः। भावार्थस्तु शुभङ्करज्ञातेन ज्ञेयः—

काञ्चनपुरे शुभङ्करश्रेष्ठी धनाढ्यो नित्य जिनार्चावन्दनादिकं तनोति। एकदा जिनमूर्ति नत्वाऽग्रे स्थितः तदा केनचित्सुरेण पूर्वं जिनाग्रे दिव्यतण्डुला बहवः पुञ्जत्रयीकृतास्तेन दृष्टाः। अपक्कानपि तान् सुगन्धीन् वीक्ष्य जिह्वास्वादवशंगतः श्रेष्ठी त्रिगुणाधिकान् स्वगृहादानीय तण्डुलाँस्तत्र मुक्त्वा तान् दिव्यान् जगृहे। स्वगृह एत्य तेषा तण्डुलाना क्षीरमपाचयत्। तेषां सुरभित्वं सर्वत्र प्रसृतं। इतश्च तद्गृह एको मासक्षपणः सुविहितसाधुर्भिक्षार्थं समेतः। श्रेष्ठिना क्षीरमध्यात् किञ्चिद्दत्त। मुनिस्तु परमार्थमविदन् तमाहारं झोलिकायां मुक्त्वाऽग्रे चचाल। तदा मुनिस्तु सप्तचत्वारिंशद्दोपमुक्ताहारी अत एव शुद्धकोष्ठकधरस्तदयोग्याशनगन्धागतमहिम्ना दध्यौ–"अहो महेभ्यावतारः श्रेष्ठोऽस्मदपि, यत्रेदं मनोहरमशनं यथेष्टं स्वेच्छया नित्यखानं (भोज्यं) भवति" एवं तदाहारागतगन्धेन चारित्र-ध्यानं मुनेर्दूरं गतं। इत्थं गुरुपार्श्वमगात् तत्र च दध्यौ–"किं गुरुसमक्षमाहारालोचनेन ? अद्य रुचिराहारोऽस्ति, लोभेन यदि स्वयमे-वाहरेत्तदाऽहं किं कुर्वे ? आलोचनयाऽलं"। ततः शीघ्र स शिष्यो भोजनार्थं स्थितो दध्यौ–"अहो अस्य स्वादो देवानामपि दुर्लभः, अद्यैव प्राप्तभवस्य सारो दृष्टः, एतावन्तं कालं यावन्मया देहो दमितः कृशीकृतश्च, एतादृगशनं नित्यं लभ्यते तस्यैव सफलं जन्मेति" ततस्तदाहारं भुक्त्वा सुखं सुप्तो निद्रां प्राप आवश्यकादिक्रियाकालेऽपि नोत्थितः। तदा सूरीशो दध्यौ–" नूनं सदा सुविनीतोऽपि

अयमद्यैव प्रमादी जातः, तत्कारणमशुद्धाहारकरणमेव भावि "। ततः प्रभाते स श्राद्धः सूरीशं वन्दनाय समेतस्तं मुनिं सुप्तं वीक्ष्य हेतुं पप्रच्छ। सूरिः प्राह—" कल्ये आहारं कृत्वा सुप्तः, उत्थापितोऽपि नोत्तिष्ठति " तच्छ्रुत्वा श्रेष्ठयुवाच—हे पूज्य ! आहारस्तु कल्ये मद्गृहादगृहीतोऽस्ति "। गुरुः पप्रच्छ–त्वया सर्वदोषैर्विमुक्तं आहारं प्रतिलाभितो न वा ? " स प्राह—" दोषस्तु कोऽपि न ज्ञातः, परं जिनगृहात्तण्डुलास्त्रिगुणाधिकानन्यान्मुक्त्वा मया गृहीताः " इति भद्रकत्वात्सर्वं वृत्तान्तं जगाद। श्रुत्वेति गुरुः प्राह–नाहं तवेदं करणं यतः—

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसण गुणाणं। भक्खंतो जिणदव्वं, अणंतसंसारिओ होइ ॥ १ ॥

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसण गुणाणं। रक्खंतो जिणदव्वं, परित्तसंसारिओ होइ ॥ २ ॥

तथा शृणु हे श्राद्ध ! कस्मिंश्चित्पुरे एक इभ्यः प्रातिवेश्मिकमेकं नरं पीडयति। स निःस्वो दध्यौ—" यथायमिभ्यो मत्तुल्यः स्यात्तथाऽहं कुर्वे "। तत एकदा निष्पद्यमानमिभ्यगृहं दृष्ट्वा चैत्यगृहेष्टिकाखण्डस्तेन भित्त्यां प्रच्छन्नं चायितः। ततः क्रमेण तद्गृहे वसन्निभ्यो निःस्वोऽभवत्। तदा स निःस्वः प्राह—"मद्विडम्बनाफलं त्वयेदं प्राप्तं मत्कृतमवेहि "। ततः स इभ्यः सामवाक्यतस्तं समतोपयत्, ततः स स्वकृत्यं जगौ। तत इभ्येन तमिष्टिकाखण्डं भित्तितो निष्कास्य प्रायश्चित्तपदे नूतनं चैत्यं विदधे, तदा स पुनः सुखी बभूव। तस्मात् हे श्रेष्ठिन् ! त्वया त्विदं भक्षितं, अतो महत्पापं लग्नं "। तच्छ्रुत्वाभीतः श्रेष्ठी प्राह—" हे पूज्य ! ममापि कल्ये एव बहुद्रव्यहानिर्जाताऽस्ति "। सूरिर्जगौ—"हे श्रेष्ठिन् ! तव तु बाह्यं धनं गतं, मुनेः पुनरान्तरं धनं विनष्टं। अत्रालोचनापदेऽधुना तव गृहे यावद्धनं वर्तते तद्व्ययेन चैत्यकरणे तवलाभोऽस्ति "। ततः श्रेष्ठिना तथा कृतं। ततः सूरी रेचकपाचकद्रव्यं

पाययित्वा शिष्यकोष्ठकं शुद्धं चकार, तदाहारपात्रमपि गोमयरक्षालेपमयं कृत्वा दिनत्रयं यावत्सातपस्थले मुक्तं, ततो प्रासं जातं सूरिशिष्यस्तत्पापं तपसाऽऽलोच्य संयमेन स्वात्मसाधनं समाराधयत् ॥ इति शुभङ्करश्रेष्ठिज्ञातम् ।

श्राद्धो भोगाय देवस्वं, मुक्त्वा मूल्यं समाधिकं । नादद्यान्नैव दातव्यं, श्राद्धानां च परस्परम् ॥ १ ॥

---

उद्यापनादात्रपि प्रौढाडम्बरेण स्वनाम्ना मण्डिते जने बहुश्लाघादि स्यान्निष्क्रयं तु स्तोकं मुञ्चति इति व्यक्त एव दोष इति यवृद्धिद्वारे गाथायामुक्तं तत्रार्थे श्राद्धविधिगदितं लक्ष्मीवतीज्ञातम् । यथा—



सा महर्द्धिर्धर्मिष्ठा महत्वार्थिनी स्तोकस्तोकनिष्क्रयार्पणेन विविधोद्यापनादिपुण्यकार्याणि प्रौढाडम्बराण्यजस्रं करोति कारयति च देवादिद्रव्यं वर्द्धयन्त्यस्मि, प्रभावनां च प्रोज्झम्भयन्त्यस्मीति धिया । एवं श्राद्धधर्ममाराध्य मृता स्वर्गतापि प्रज्ञापराधदोषाद्धीनसुरीत्वेनोत्पन्ना, क्रमाच्च्युता महेभ्यस्य निरपत्यस्य मान्यत्वेनोत्पन्ना । परं तस्या गर्भस्थत्वे मातुः सिमन्तमहः परचक्रभयोद्रेकेण जन्म-षष्ठी-नामस्थापना-मुण्डनादिमहाश्च नृपत्यमात्यादीनां गृहे शोकोत्पत्त्या नाजायन्त पित्रा प्रौढ-प्रौढतराऽडम्बरेण प्रारब्धा अपि । तथा मणिस्वर्णाभरणानि सर्वाङ्गीणानि पित्रा सादरं कारितान्यपि तया दिनमात्रमपि परिधातुं नाशकयन्त स्तेनादिभयेन । एवं भोजननेपथ्यादावपि प्रायो यद्यत्सामान्यं तत्तत्स्या आपतती सर्वत्र मान्यत्वेऽपि प्राक्कर्मदोषेण । तदुक्तं केनचित्—

सायर तुज्झ न दोसो, दोसो अम्हाणपुव्वकमाणं । रयणायरंमि भरिए, सालुरो हत्थि मे लग्गो ॥ १ ॥

अस्या एकोऽपि महो न जातोऽस्तीत्याऽडम्बरेण पित्रा तस्यां विवाहे विधीयमाने लग्नासन्नौ माता मृता तेन निरुत्सवं पाणिग्रहणमात्रमजनि । महेभ्योदारश्वशुरगृहगमनेऽपि मान्यत्वेऽपि च प्राग्वत्नवनवभयशोकमान्द्यादिना मनोऽभीष्टभोगसुखोत्सवादियोगस्तस्याः प्रायो नासीत् । ततस्तयाऽत्युद्विग्नया संविग्नया च क्वचित् केवली पृष्टः प्रोचे, "प्राग्भवे त्वया स्तोकनिष्क्रयार्पणप्रौढाडम्बरदर्शनादिना दुष्कर्मार्जितं तत्फलमिदम्" । ततः सा तत्पापमालोच्य प्रव्रज्य क्रमात् सिद्धा ॥ इति लक्ष्मीवतीज्ञातम् ॥ प्रकृतेऽयमत्र विशेषः–तस्मादुद्यापनढौकनादौ निष्क्रयप्राह्यवर्तुलिकानालिकेर–मोदकदेयावन्मूल्यं स्यात्तावत्तन्निष्पादनानयनाद्युपक्रमपदे तदनुसारेण कियदधिकं चार्पणीयम् । एवं निष्क्रयशुद्धिः । केनचित् सविस्तरोद्यापनादौ स्वनाम्ना मण्डितेऽधिकशक्त्याद्यभावात्तदुद्यापनाचारसत्यापनार्थं कश्चिद्यावन्मुञ्चति, तावतापि न दोषः ॥

---

सकलपण्डितमुकुटायमान–विद्वद्वर्य–मुनिमतल्लिका श्रीमत् सोमधर्मगणिविरचितोपदेशसप्ततितः कथानकद्वयम् ॥

कुर्वन्ति देवद्रविणोपभोगं, ये ते नरा दुर्गतिगामिनः स्युः ।
कथानकान्यत्र बहुनि सन्ति, तथापि दिग्मात्रमुदाहियेत ॥ १ ॥

इह खलु एकान्तश्रीदेवगुरुभक्तिकारकेण विशुद्धश्रीसम्यक्त्वमूलद्वादशव्रतधारकेण सुश्रावकेण दैवसम्बन्धिद्रव्योपभोगः सर्वथा न कार्यः, स्वपरसमयनिषिद्धत्वाद् बहुदोषसम्भवाच्च—

देवद्रव्येण या वृद्धि–र्गुरुद्रव्येण यद्धनम् । तद्धनं कुलनाशाय, मृतोऽपि नरकं व्रजेत् ॥ १ ॥

एकमपि कटुकतुम्बीबीजं भारसहस्रप्रमाणमपि गुडं विनाशयति, विषस्य लवोऽपि परमान्नभृतं स्थालं सर्वेषामनुपयोगि किं न विधत्ते ? दृश्यन्ते च केऽपि मूर्खा देवद्रव्येण व्यवसायादि कुर्वतः, कदाचिन्निर्धनत्वे जाते देवद्रव्यसाराविधायिभिस्तद्द्रव्यपश्चान्मार्गणे एवं वदन्तो यथा—न सन्ति सम्प्रत्यस्मत्पार्श्वे द्रम्माः, पितृस्थानीयो वाऽस्माकं जिनः, न हि पितृधनं पुत्राणां किमपि अनादेयम्, इत्यादियत्तत्प्रलापिनो वराकास्तेऽनन्तानन्तसंसारक्लेशभाजनं भवन्ति केचित्तु धनवन्तोऽपि महत्तरास्पृहयालवः प्रभूतसमुदायमध्ये बहुकुसुमपरिहितेन्द्रमाला लभ्यीकृत्य बहुदेवद्रव्या अपि तन्मार्गणे दीनमेव भाषन्ते, मनसापि तदर्पणं न वाञ्छन्ति । देवस्य किमपत्यानि क्षुधा म्रियमाणानि सन्ति । देवस्तत्र किमधिको मम किं न्यूनो, यदा विलोकयिष्यते तदानीमर्पयिष्यामि, इत्यादि कालक्षेपमेव कुर्वाणा उल्लुण्ठवादिनस्तेऽपि तेषामेव पद्धतौ निवेशनीयाः अत्र भ्रातृद्वयोदाहरणम् —

विश्वपुरे क्षेमङ्करो राजा तस्य युगन्धरः पुत्रः । सोऽन्यदा वने कस्यापि मुनेः केवलज्ञानोत्सवं देवैः क्रियमाणं दृष्ट्वा सञ्जातजातिस्मृतिस्तदैवोत्पन्नवैराग्यो देवतादत्तवेषः प्रवव्राज वन्दितो राजाद्यैः विजहारवसुन्धरावलये, चकार भूयांस्यपि तपांसि । अन्यदा तस्य मुनेः शुक्लध्यानाधिरूढस्यावधिज्ञानमुत्पेदे । आगतस्तत्रैव पुरे । राजादयो वन्दितुं गताः, प्रारब्धा तेनापि धर्मदेशना, तत्र चावसरे कोऽपि कुष्ठी सर्वरोगराजधानीव, मक्षिकाणां पितृगृहमिव, पदे पदे बालकाद्यैरपि कर्करादिभिरुपहन्यमानस्तत्र प्राप्तः । राजादयश्च तादृशदुर्दशानिपतितं दृष्ट्वा तस्य प्राच्यभवं मुनेः पार्श्वे पृच्छन्ति । मुनिः प्राह—कुसुमपुरे नन्दनागदेवौ द्वौ भ्रातरौ । वृद्धो व्यवहारे शुद्धः, अपरस्तु विपरीतः । अन्यदा तन्नगराधिपेन स्वकारितजिनमन्दिरे देवद्रव्यरक्षणाय नियुक्तौ, स्वशक्त्या सारां कुरुतः । अन्यदा नागदेवः क्षीणधनोऽन्तरान्तरा निर्लज्जतया स्वल्पं स्वल्पं तु देवद्रव्यं भुङ्क्ते । वृद्धभ्राता तु—



नन्दनागदेवचरित्रम्

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । भक्खंतो जिणदव्वं, अणंतसंसारिओ होइ ॥ १ ॥
जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । रक्खंतो जिणदव्वं, परित्तसंसारिओ होइ ॥ २ ॥
जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । वड्ढंतो जिणदव्वं, तित्थयरत्तं लहइ जीवो ॥ ३ ॥

इत्यादि बहुप्रकारश्रीआगमोक्तवाचोयुक्तिभिर्निवारितोऽपि यावता लघुर्न तिष्ठति, तावता वृद्धश्चिन्तयति स प्रातर्भूपाय निवेदयिष्यामीति । अत्रान्तरेऽकस्माच्छूलेन रात्रौ मृतः व्यवहारिणः सुतो जातः । तत्र भवे भव्यान् भोगान् भुक्त्वा प्रान्ते व्रतं लात्वा प्राणतकल्पे देवो जातः । एवं सप्तभवान् दीक्षामाराध्य अच्युतादिषु देवत्वेन समुत्पद्य च क्रमेण सोऽहं युष्मत्पुत्रो युगन्धरो जातः । नागदेवस्तु तस्मिन्नेव भवे विज्ञातस्वरूपः सन् राजादिभिर्भृशं गर्हितः । भक्षितदेवद्रव्यपदे गृहीतगृहसर्वस्वश्च प्रान्ते षोडशवर्षाणि रोगार्त्तः शेषद्रव्यार्प्पणाय सुतानां कथयित्वा मृतः । पूर्वाभ्यासतश्च प्रतिभवं तथैव कुर्वन् सप्तसु नरकेषु तिर्यग्भवान्तरितो भ्रामं भ्रामं एष वराकः कुष्टी जातः यदुक्तम्—

भक्खणे देवदव्वस्स, परत्थी गमणेण य । सत्तमं नरयं जंति, सत्तवाराउ गोयमा ! ॥ १ ॥

इति श्रुत्वा स कुष्ठी जातिस्मृतिं प्राप्य आलोचितसकलपापः, प्रान्ते प्रपन्नानशनो मृत्वाऽच्युते देवो जातः । क्रमेण महाविदेहे मोक्षङ्गमी । स च युगन्धरराजर्षि क्रमेण सिद्धिसौधमध्यास्त ॥ इति देवद्रव्यरक्षणे परिभोगे च नन्दनागदेवयोर्दृष्टान्तः ।

---

देवद्रव्यपरिभोगे परसमयोक्तं कुक्कुरदृष्टान्तः—

प्रमादस्वे मा मतिं कुर्याद्, प्राणैः कण्ठगतैरपि । अग्निदग्धाः प्ररोहन्ति, प्रमादग्धाः पुनर्नहि
पुरा जगत्त्रयाभीष्ट-नामा श्रीरामभूपतिः । पुर्यामयोध्यायां, साम्राज्यं पर्यपालयत् ॥ १ ॥ तदैकः कुक्कुरः कश्चि-न्निविष्टो राज-
वर्त्मनि । केनचिद्ब्रह्मपुत्रेण, कर्करेण हतः श्रुतौ ॥ २ ॥ श्वा निर्यल्लोहितो न्यायय-स्थानं गत्वा निविष्टवान् । भूपेनाहूय पृष्टोऽत्रग्,
निरागाः किमहं हतः ! ॥३॥ तद्घातकं ब्रह्मपुत्रं, तत्रानाय्य नृपोऽब्रवीत् । असौ त्वद्घातको ब्रूहि, कोऽस्य दण्डो विधास्यते ॥ ४ ॥
श्वाऽवोचदस्य रुद्रस्य, माठापत्ये नियोज्यताम् । क एष दण्डो राज्ञेति, भाषितः श्वा पुनर्जगौ ॥५॥ प्रागहं सप्त जन्मभ्यः, पूजयित्वा
सदाशिवम् । देवस्वभीत्या प्रक्षाल्य, पाणी भोजनमाचरम् ॥६॥ स्त्यानाज्यमन्यदा लिङ्ग-पूरणे लोकढौकितम् । विक्रीणानस्य काठि-
न्या-न्नखान्तः प्राविशन्मम ॥ ७ ॥ विलीनमुष्णभक्तेना-जानता तन्मयाहृतम् । तेन दुष्कर्मणा सप्त-कृत्वो जातोऽस्मि मण्डलः ॥८॥
सप्तमेऽस्मिन् भवे राजन् ! जात जातिस्मृतिर्मम । अधुना त्वत्प्रभावेण, जाता वाग्मम मानुषी ॥ ९ ॥ एवमज्ञानतो भुक्तं, देवस्वं दुःख-
कारणम् । रक्षणीयमतस्तद्धि, विवेकज्ञैः स्वशक्तितः ॥ १० ॥ अधिकारात्त्रिभिर्मासै-र्माठापत्यात्त्रिभिर्दिनैः । शीघ्रं नरकवाञ्छा चेद्,
दिनमेकं पुरोहितः ॥ ११ ॥ विन्ध्याटवीष्वतोयासु, शुष्ककोटरवासिनः । कृष्णसर्पाः प्रजायन्ते, देवदायोपहारिणः ॥१२॥ एवं देव-
द्रव्यरक्षाविनाशे, श्रुत्वा भव्याः ! स्पष्टदृष्टान्तयुग्मम् । कार्यो यत्नस्तस्यरक्षाविधाने, संसारः स्याद्यो यथा शीघ्रमल्पः ॥ १३ ॥

इति देवद्रव्यपरिभोगे परसमयप्रसिद्धं श्वानकथानकम् ।

सकलसूरिपुरन्दरपरमगुरु तपागच्छगगनाङ्गणनभोमणिगच्छाधिराजभट्टारकश्री. ५

श्रीविजयसेनसूरिप्रसादित-सेनप्रश्नतः देवादिद्रव्यविषयाः प्रश्नोत्तराः—

प्रश्नः-मालासम्बन्धि स्वर्णरजतसूत्रादि सर्वं देवद्रव्यं वा ज्ञानद्रव्यं वा साधारणद्रव्यं वेति। उत्तरम्—तत् सर्वं देवद्रव्यमिति सम्प्रदायः ॥ सेनप्रश्न० २ उल्लास प्र० ३२ पं. आनन्द वि०

प्रश्नः—ज्ञानद्रव्यं देवकार्ये उपयोगि स्यान्नवा? यदि स्यात्तदा देवपूजायां प्रासादादौ वेति । उ० एकत्रैव स्थानके देवरिक्तं, क्षेत्रद्वयामेव तु ज्ञानरिक्तम् । सप्तक्षेत्र्यामेव तु स्थापनीयं श्रीसिद्धान्तो जैन एवं ब्रवीति ॥ १ ॥ एतत्काव्यमुपदेशसप्ततिकाप्रान्तेऽस्ति, एतदनुसारेण ज्ञानद्रव्यं देवपूजायां प्रासादादौ चोपयोगि भवतीति ॥ से० २ उ० प्र-८४ पं. कनकवि-कृतप्रश्नः । उपदेशसप्ततिकान्तरगतपाठस्त्वेवम्-ज्ञानद्रव्यं यतोऽकल्प्यं, देवद्रव्यवदुच्यते । साधारणमपिद्रव्यं, कल्पते सङ्घसम्मतम् ॥ २० ॥ श्रीसङ्घेनापि तद्द्रव्यं, सप्तक्षेत्र्यां जिनाज्ञया । व्ययनीयं न देयं तु, मार्गणादौ यथा तथा ॥ २१ ॥ यतः—

एकत्रैव स्थानके देववित्तं, क्षेत्रद्वयामेव तु ज्ञानरिक्थम् ॥ सप्तक्षेत्र्यां स्थापनीयं तृतीयं, श्रीसिद्धान्ते जै(जि)न एवं ब्रवीति ॥ १ ॥ जातु ज्ञानादिसम्बन्धि-द्रव्यभोगो भवेत्तदा । तत्पदे निजवित्तानि, देयानिद्विगुणान्यपि ॥२२॥ इति उपदे०, ५ अधि०, १७ उप०

प्रश्नः—देवद्रव्याधिकारे कथं श्राद्धैर्देवद्रव्यवृद्धिं कर्त्तुं शक्यते, यदुक्तमागमे—' भक्खंतो जिणदव्वं अणंतसंसारिओ भणिओ ' इति जानन्नपि आत्मव्यतिरिक्तानां यच्छन् तेषां संसारवृद्धिं प्रति कारणं भवति, न हि विषं कस्यापि विकारकृन्न स्यात् सर्वेषामपायकृदेव स्यात्, ग्रन्थान्तरे आलोचनाधिकारे मूषकादीनामपि दोषोत्पत्तिरुक्तास्ति, तदत्र का वृद्धिं प्रतिरीतिरिति अत्रोत्तरं-मुख्यवृ-

त्या श्राद्धानां देवद्रव्यस्य विनाशन एव दोषः, यथाकालमुचितव्याजदानपूर्वकं ग्रहणे तु न भूयान् दोषः, समधिकव्याजदाने पुनर्दोषाभावोऽवसीयते, तेन तेषा यत्तद्वर्जनं तन्निःशूकतादिदोषपरिहारार्थं ज्ञेयम् । किञ्च–श्रीजिनशासने देवद्रव्यस्यविनाशे दुर्लभबोधिता तद्रक्षादिदेशनादानादौ साधोरपि भवदुःखं च शास्त्रे दर्शिते स्तः, तेन तदभिज्ञाना श्राद्धाना तस्याव्यापारणमेव यौतिकं, मा कदाचित्प्रमादादिना स्वल्पोऽपि तदुपभोगो भवत्विति सुस्थानस्थापनप्रत्यहं सारादिकरणपुरस्सर महानिधानवत्परिपालने च तेषामपि न कोऽपि दोषः, किन्तु तीर्थकृन्नामकर्म्मनिबन्धनादिहेतुर्लाभ एवेति, इतरस्य तु तद्भोगदोषानभिज्ञस्य निःशूकताद्यसंम्भवाद्वृद्ध्यर्थं ग्रहणग्रहणपूर्वकं समर्प्पणे न दोष इति तथा व्यवह्रियमाणमस्तीति सम्भाव्यते मूषकादिषु तु वृद्ध्याद्यर्थं समर्पणव्यवहाराभावात्तेषां तद्भक्षणे दोष एवेति ॥ से० उ० २ प्र० १५६ पं जयविजयगणिकृत प्र० ।

प्रश्नः–कश्चित् श्राद्धः स्वद्रव्येण प्रतिमा कश्चित् पुस्तकं च तदा प्रतिमाकर्तुर्देवद्रव्यं पुस्तकलेखकस्य ज्ञानद्रव्यं च लगति नवेति । अत्रोत्तरं–उभयोरपि यथाक्रमं ते उभे न लगते इति सम्भाव्यते। से० उ० २ प्र० १९७ पं० देवविजयगणिकृत प्र०

प्रश्नः–गृहचैत्ये यदि केनचिदर्हतां भूषणानि कारितानि कालान्तरे च स गृहस्थो गृहकार्ये आपतिते तानि व्यापारयति तदा कल्पन्ते नवेति, उत्तरम्–यदि देवार्थमेव कारितानि तदा न कल्पन्ते यदा तु साधारण्यंन कारितानि तदा कल्पन्ते, अत्राभिप्राय एव प्रमाणमिति । से० उ० ३ प्र० १६९ पं० विनयकुशलगणिकृत प्रश्नः ।

प्रश्नः–सप्तक्षेत्रमुक्तद्रव्यान्तः साधुसाध्वीद्रव्यस्य व्ययः साधुसाध्वीनां कस्मिन् स्थाने योज्यते श्राद्धैरिति, अत्रोत्तरम्–सप्तक्षेत्रीमुक्तद्रव्यस्य व्ययः साधुसाध्वीक्षेत्रयोरापत्त्राणवैद्यानयनमार्ग्गसहायकरणादिषु श्राद्धैः कार्यत इति॥ से०उ–३प्र०२७२पं–पद्मविजयग०प्र०

प्रश्नः—देवद्रव्यस्य वृद्धिकृते श्राद्धैस्तत्स्वयं व्याजेन गृह्यते न वा इति तद्ग्राहकानां दूषणं किं वा भूषणमिति । अत्रोत्तरम्—श्राद्धानां देवद्रव्यस्य व्याजेन ग्रहणं न युज्यते, निःशूकता प्रसङ्गात् न तु वाणिज्यादौ व्यापारणीयं स्वल्पस्यापि देवद्रव्यभोगस्य सङ्काशसम्बन्धादिष्वतीवायतौ दुष्टविपाकजनकतया दर्शितत्वादिति ॥ से० उ-२ प्र-३७४ पं० पद्मविजयकृत प्रश्नः ॥

प्रश्नः—केनापि स्वगृहं जिनगृहे मुक्तं, तत्र श्राद्धः कोऽपि भाटकं दत्वा तिष्ठति न वेति उत्तरम्—यद्यपि साधिकभाटकप्रदानपूर्वकमवस्थाने दोषो न लगति, तथापि तथाविधकारणमन्तरेदं युक्तिमन्न प्रतिभाति देवद्रव्यभोगादौ निश्शूकताप्रसङ्गात् इति से० उ० ३ प्र-४१६ पं-हर्षचन्द्रकृत प्रश्नः ॥

प्रश्नः—उपाश्रये सांवत्सरिकादिप्रतिक्रमणावसरे यद् घुसृणतैलादि मान्यते तद्देवद्रव्ये साधारणद्रव्ये वा समायाति इति, उत्तरम्—यथाप्रतिज्ञं देवद्रव्ये साधारणद्रव्ये वा समायातीत्यवधेयम् ॥ से०उ० ३ प्र० ४३१ पं० विद्याविजयगणिकृत प्रश्नः ॥

प्रश्नः—श्राद्धा देवद्रव्यं व्याजेन गृह्णन्ति न वा इति । उत्तरम्—महत्कारणं विना न गृह्णन्ति इति ॥ से० उ० ३ प्रश्नः । ४९२ गणिजीवविजय कृत प्रश्नः ॥

प्रश्नः—जिनालयकार्यकर्तुः आत्मीयं कार्यं दीयते न वा इति । उत्तरम्—जिनालयसत्यापकेन स्वकीयकार्यं न कार्यत इति ॥ से० उ० ३ प्रश्नः ४९३ गणिजीववि० कृत प्रश्नः ॥

प्रश्नः—ज्ञानद्रव्यममारीद्रव्यं च जिनगृहकार्ये आयाति न वेति । उत्तरम्—जिनालयकार्ये आयाति इति अक्षराण्युपदेशचिन्तामणौ सन्ति, अमारिद्रव्यं तु महत्कारणं विना न समायाति इति ज्ञायते ॥ से०उ ३ प्र० ४९४ गणिजीववि० कृत प्रश्नः

प्रश्नः—शतदोकडकपुष्पाणि मालिकपार्श्वाद् गृहीत्वा जिनप्रतिमायाश्चटाप्यते, मालिकस्य तद्द्रव्यस्थाने धान्यवस्त्रादिकं समर्प्यते तदर्प्पणे च दोकडदशकमुद्धरति, तद्द्रव्यं देवसत्कं मालिकसम्बन्धि वा इति। उत्तरम्-शतदोकडपुष्पाणि गृहीत्वाधान्यादिकं समर्प्यते, तदर्प्पणे च कडकोशेरकेण यदुद्धरति तद्देवद्रव्यं भवति न तु मालिकस्य, यतो लोके शतदोकडपुष्पचटापनयशोवादो जायते तस्मान्न्यूनचटापने दोषो लगति, तदुद्धरितं द्रव्यं देवद्रव्यमध्ये प्रक्षिप्यते तदा दोषो न लगतीति॥ से०उ०४ प्र०९१ वटपल्लीयसङ्घकृतप्र०॥

प्रश्नः—द्रव्यलिङ्गिद्रव्यनिष्पन्नचैत्यमविधिचैत्यमित्यागमोक्तिः, पुस्तकादिक्षेत्रेषु तद्द्रव्यव्यापारणं युक्तमयुक्तं वा? यदि युक्तं तर्हि चैत्ये कथमयुक्तं? तदर्पितं पुस्तकं सुविहितैः कथं गृह्यते इति, तथा कैश्चिच्चिरन्तनाचार्यैः शिथिलपथमपास्य स्वद्रव्यानीतमुक्तापटलं लेष्टुनाचूर्णीकृतं उग्रविहाराङ्गीकारसमये, यदि तद्द्रव्य पुस्तकादिषु कल्पनीयमभविष्यत् तदा मुक्ताफलचूर्णनेन तद्द्रव्यविनाशनं नाकरिष्यदिति। उत्तरम् चैत्यमाश्रित्य विध्यविधिविचारः शास्त्रेषु प्रोक्तोऽस्ति न तु पुस्तकमाश्रित्य, तेन न तयोः साम्यम् तत एव च परम्परयापि तत्पुस्तकं गृह्यमाणमस्तीति न काऽप्यनुपपत्तिः। यच्च कैश्चिच्चिरन्तनदर्शनिभिः सुविहितमार्गाङ्गीकारे मुक्ताफलानि लेष्टुना चूर्णीकृतानि तदुग्रवैराग्यवत्तास्व्यापनार्थमिति न काप्यनुपपत्तिरिति॥ से०उ०३ प्र० २५८ पं—कीर्तिविजयगणिकृत प्रश्नः॥

प्रश्नः—तीर्थे यन्नालिकेरादिद्रव्यं मानितं तदेव मुच्यतेऽन्यद्वा इति। उत्तरम् शङ्खेश्वरादितीर्थे मूलविधिना यदेव मानितमभूत् तदेव मुच्यते, कारणे तु यथा देयं न भवति तथा कर्त्तव्यमिति॥ से० उ० ३ प्र० ४४१ पं० धीरकुशलगणिकृत प्रश्नः॥

प्रश्नः—गोप्रभृतिजीवमोचनाय द्रव्यलिङ्गिनां द्रव्यं ग्रहीतुं कल्पते न वा इति। उत्तरम्—ज्ञानादिसम्बन्धि द्रव्यं न भवति तदा गृह्यते निषेधो ज्ञातो नास्तीति। से० उ० ३ प्र ४६९ पं-नाकर्षिगणिकृत प्रश्नः॥

# द्रव्यसप्ततिकायाः शुद्धिपत्रकम्

| पृष्ट | पङ्क्ति | अशुद्ध | शुद्ध | पृष्ट | पङ्क्ति | अशुद्ध | शुद्ध | पृष्ट | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ११ | स्थितत्त्व | स्थिततत्त्व | १६ | २ | दुःख | दुःख— | ३१ | १२ | दुःखदं | दुःखदं |
| २ | ३ | श्रीविरजि | श्रीवीरजि | १६ | ४ | तिर्यङ्क्षेव | तिर्यङ्क्षेव | ३२ | ८ | १ मो | १५ मो |
| २ | ८ | जाया | जया | १७ | ८ | (साधुसूरि) | [साधुसूरि] | ३३ | १ | साहज्जे वद्वइ | साहज्जे वट्टइ |
| ३ | १४ | दोपायत्तिः | दोपापत्तिः | १९ | ८ | नियस | निर्यस | ३४ | १४ | सुद्धि | सुद्धि |
| ४ | १ | शिक्षप्रयोजका | शिक्षाप्रयोजका | २० | १० | फलादि द्रव्या- | फलादिद्रव्या- | ३५ | १ | सुद्धेण | सुद्धेण |
| ४ | ४ | स्थैद्वारैरेतस्य | स्थर्द्वारैरेतस्य | २१ | १ | तृष्णागृह | तृष्णाग्रह | ३६ | १ | तक्कर | तक्कर |
| ४ | ८ | तेणेयभि | त णेयमि | २१ | ६ | चत्य | चैत्य | ३६ | ३ | अहण | अहणम् |
| ४ | १४ | छावक | छ्रावक | २२ | ६ | दृष्टि | दृष्टि | ३७ | १ | उक्कंचा | उक्कं चा |
| ६ | १३ | कार्य कारण | कार्यकारण | २४ | ३ | कर्मनियमा | कर्म नियमा | ३७ | २ | युष्मासि | युष्माभि |
| ७ | ३ | ब्याजादी | ब्याजादि | २५ | ७ | परित्त संसा | परित्तसंसा | ३७ | ९ | पादः | पादाः |
| ७ | ३ | दानोपेक्ष | दानोपेक्ष— | ३० | २ | तद्भृति | तद्धेति | ३८ | १२ | मम्मदि | सम्मदि |
| १२ | १३ | पूर्व | पूर्व | ३१ | ३ | चुत्वा | च्युत्वा | ३९ | १२ | दृश्यते | दृश्यंते |
| १२ | १४ | साहात्म्यं | माहात्म्यं | ३१ | ७ | मजेत् | व्रजेत् | ४५ | १४ | एवंतद्विधि | एवं तद्विधि |

| पृष्ट | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५१ | ३ | सकांशो | सकाशो |
| ५३ | ४ | त्सपणा | त्नर्पणा |
| ५४ | ७ | किर्त्ति | किचि |
| ५४ | १० | ग्रन्थ समाप्ति | ग्रन्थसमाप्ति |
| ५६ | ८ | दृत्त | दृत्तं |
| ५७ | १२ | छुत्वाभीत. | छुत्वा भीतः |
| ५८ | ६ | महत्ना | महत्वा |
| ५९ | ११ | देव | देन |
| ६० | ३ | अनादे | अनादे- |
| ६० | ९ | विजहारवसुन्धरा | विजहार वसुन्धरा |
| ६० | १४ | वृद्धाभ्राता | वृद्धभ्राता |
| ६१ | १२ | दृष्टान्तः | दृष्टान्तः |
| ६२ | ९ | अधिकरा | अधिकारा |
| ६३ | ८ | सद्भ | मद्द |
| ६३ | ११ | देयानिद्विगुणा | देयानि द्विगुणा |
| ६४ | ३ | भिक्षाना | भिक्षानां |
| ६४ | ११ | साधारणसन | साधारण्येन |
| ६६ | २ | गृहीत्वाधान्या | गृहीत्वा धान्या |
| ६६ | ७ | लेष्ठुनाचूर्णी | लेष्टुना चूर्णी |

महामहोपाध्यायश्रीलावण्यविजयगणिविरचिता द्रव्यसप्ततिका सवृत्तिः सम्पूर्णा.

आचार्यश्रीमद्विजयसिद्धिसूरीश्वरजी ग्रन्थमालायाः प्रथमं पुष्पम् ।

महामहोपाध्याय श्रीमद् लावण्यविजयजीगणि विरचिता

# ॥ श्रीद्रव्यसप्ततिका (स्वोपज्ञवृत्तियुता) ॥

